श्रीमद्गणेशपुराणोपासनाखण्डान्तर्गतं

# गणेशसहस्रनाम

भास्कररायप्रणीत–खद्योतभाष्यसमेतम्






निर्णयसागरमुद्रणालयम्, मुंबई २

श्रीमद्गणेशपुराणोपासनाखण्डान्तर्गतं

# गणेशसहस्रनाम

श्रीमत्पदवाक्यप्रमाणपारावारपारीण—

भारत्युपनामकभास्कररायप्रणीत—

खद्योतभाष्यसमेतम्



श्रीमदिन्दिराकान्ततीर्थचरणान्तेवासिभिः

नारायण राम आचार्य "काव्यतीर्थ"

इत्येतैः पाठान्तर-टिपण्यादिभिरलंकृत्य संशोधितम्

१९५१

निर्णयसागरमुद्रणालयम्, मुंबई २

# भूमिका

**निर्विघ्नविश्वनिर्माणसिद्धये यदनुग्रहम् ।**
**मन्ये स वव्रे धातापि तस्मै विघ्नजिते नमः ॥**

को न को जानाति कर्तुमकर्तुमन्यथाकर्तुं समर्थममुं गजाननं गणनायकं विघ्नेशम् । यस्य कृपयाऽकृपया च स्वर्गे नाकवासिनो हरिहरप्रभृतयः सर्वेऽपि गीर्वाणा भूमौ मानवाश्च समधिगता अन्तरायमनन्तरायञ्चेति सुप्रसिद्धमेव ।

श्रीगणेशस्य श्रीगणेशसहस्रनामस्तोत्रस्य दैत्यदानवानामधिपस्य त्रिपुरासुरस्य च प्रादुर्भावविषये श्रीगणेशपुराणतो यथाशक्यं सारं समुद्धृत्य समुपस्थाप्यते पुरःसरं तत्रभवताम् ।

**गणेशस्य मन्त्रप्रभावेण रुक्माङ्गदनाम्नो नृपतेः कुष्ठरोगान्निर्मुक्तिः ।**

पुरा किल कश्चिद्भीमनामा नृपतिः पुत्रार्थं प्रार्थिताद्विश्वामित्रादेकाक्षरं श्रीगणेशस्य मन्त्राक्षरं ( गम् इति महामन्त्रम् ) समवाप्य स्वां राजधानीं गत्वोपवासादियमनियमान्समाहृत्य नित्यमेकाक्षरं गणेशमन्त्रं जपन् तपश्चकार । अचिरेणैव कालेन राज्ञस्तपसा सन्तुष्टो गणेशस्तस्य सन्निधिमवाप्य राज्ञो हस्तं गृहीत्वाऽऽह–"हे राजन्! तपसा सन्तुष्टोऽहं ते वरं ददे; स्वर्णतनुर्गुणी चारुदर्शनस्ते सुपुत्रो भविष्यति यदर्थं त्वयैतत्तपः समाचरितम्" इत्युक्त्वाऽन्तर्धानं प्राप । नातिदीर्घे गते काले नृपतिर्यथोक्तं सुपुत्रं सम्प्राप्य परिपूर्णमनोरथः सन् तस्य जातकर्मादिकं विधाय शिशोः "रुक्माङ्गद" इति नाम चकार । तस्य पुत्रोऽपि महातेजस्वी प्रत्यहं स्वपित्रा प्रदत्तं श्रीगणेशस्यैकाक्षरं महामन्त्रं जपन्व्युत्पन्नमतिः स्वल्पेनैव कालेन सर्वशास्त्राणि शस्त्रादिविद्याश्च समधिगम्य युवा बोभूयैकस्मिन्नहनि मृगयार्थं परिवारेण सह वनं समभ्यगच्छत् । मृगयापरिश्रान्तो नृपतिस्तत्र नानाविधतरुलतासङ्कीर्णे कस्यचिद्वाचक्नविमुनेराश्रमं गत्वा तत्रर्षेर्मुकुन्दानाम्नीं यौवनवतीं पत्नीं नमस्कृत्य किञ्चित्कालमयापयत् । गङ्गायां स्नानार्थं गते मुनौ नृपतितनय उत्थाय "हे मातर्मुकुन्दे ! परिश्रान्तोऽहं मृगयया पानार्थमुत्तमं जलं मे देहि" इति जलमयाचत ।

तस्य नृपतेः सन्दर्शनादेव कामेनाकृष्टहृदया सञ्जातप्रीत्यनुरागमानसा चारुदर्शनं युवानं रतिप्रदानसमर्थं तमेव ध्यायती स्मितवदना महामोहं प्राप्तोवाच–"हे नृपते ! ददामि तुभ्यं सुशीतलं जलम्, भवानपि स्वाधरामृतधारया रतिकर्मणा च मदीयां मनोभवशान्तिं विदधातु, त्वां दृष्ट्वैव मन्मथबाणेन व्यथां प्राप्तास्मि ।" इत्युक्त्वा

तस्य नृपतेः समीपमाजगाम। रुक्माङ्गदो वनवासिन्या ऋषेः पत्न्या अश्रुतपूर्वमेतादृशं व्यलीकं वचः श्रुत्वा भृशं दुःखितो मुकुन्दां मातृसदृशीं मन्यमानोऽकथयत्—

**"त्यज प्रौढिं न मे चित्तं पारदार्ये विगर्हिते ।**
**विनायकप्रभावेण सक्तं नैवात्र कर्हिचित् ॥"** तथा च-
**"न जलं पातुमिच्छामि त्वया दत्तं सुदुष्टया ।**
**ऋषेराश्रम इत्येवायातो यास्य इतोऽशुभे ॥"** ग. पु. अ. २७

इत्युक्त्वा गमनाय प्रचलितस्य नृपतेः समीपं साऽपि त्वरया समासाद्य तस्य पाणिं स्वपाणिना गृहीत्वा पुनरब्रवीत्—

**"बलात्कारेण योऽन्यस्य स्त्रियं धर्षितुमिच्छति ।**
**स एव नरकं याति न स्वयं याति तामपि ॥**
**कृते त्रेतायुगे स्त्रीणां ब्रह्मा स्वातन्त्र्यमभ्यधात् ॥**
**न करोषि यदा वाक्यं तदा भस्म भविष्यसि ।**
**अथवा राज्यविभ्रष्टं करिष्ये वनचारिणम् ॥"** ग. पु. अ. २८

इत्युक्त्वा प्रवेपमाना स्वकीयहस्ताभ्यां रुक्माङ्गदं गाढं बलादालिङ्ग्य स्वयमेव चुचुम्बे। परदारविरक्तधी रुक्माङ्गदोऽपि तद्धस्ताभ्यां बलादेव निर्मुक्तस्तां दूरे चिक्षेप। साऽपि मरुता हता रम्भेव मूर्च्छिता भूमौ पपात। अपि तु तत्क्षणादेव सोत्थाय रुक्माङ्गदं राजानं शशाप-"हे दुष्ट! मूढ! स्वयमागतां कन्दर्पाकृष्टचित्तां मां परित्यक्त्वा किं गन्तुमुद्यतस्त्वम्?। अतः शपे कुष्ठरोगी भव" इति शप्त्वा मोहं प्राप्ता पपात। राजा तस्याः शापात्तत्काल एव स्वकीयं शरीरं बकवत् श्वेतं कान्त्या हीनञ्च ददर्श संमुमोह च। तथापि परस्त्रियं मातरं मन्यमानस्त्वरयाऽऽश्रमाद् बहिर्निर्गत्य स्वेष्टदेवं गजाननं प्रणिपत्याऽऽह-"हे गणेश! किमपराद्धं मया, कथं चाद्य मदीयो वाचक्नवेर्दुष्टपत्न्या सह समागमोऽभूत्?। त्वं तु स्वभक्तसंरक्षार्थं भुवि जागरूकस्तिष्ठसि नाहं त्वत्तोऽन्यं शरणं यास्ये, नाप्येतादृशं कुष्ठव्याप्तं मदीयं शरीरं कस्मा अपि दर्शये" इति प्रतिज्ञाय न्यग्रोधसन्निधौ प्रायोपवेशमासाद्य स्वशरीरस्य शोषणाय प्रवृत्तः। रात्र्यां व्यतीतायां वटस्य निकटे समासीनो नृपतिः स्वसमीपं समागच्छन्तं नारदं ददर्श। राजोत्थाय सादरं तं पूजयित्वा स्वकीयं सर्वं वृत्तान्तं प्रणतिपातपुरःसरं तस्मा अवोचत्। नारदोऽपि नृपतेर्वचः श्रुत्वा मार्गं गच्छता स्वेन यद्दृष्टं तत् सर्वं वृत्तं राजानं कथयितुं प्रवृत्तः-"राजन्! त्वत्समीपमागच्छता मया विदर्भनगरस्य समीपे कदम्बपुरे सर्वेषां कामदा वैनायिकी मूर्तिर्दृष्टा। तस्या अग्रतो

गणेशनाम्ना प्रसिद्ध एकः कुण्डोऽपि वर्तते । तस्मिन् कश्चिच्छूद्रो जर्जरितदेहो महाकुष्ठी तीर्थयात्राप्रसङ्गेन समागतस्तत्र स्नात्वा दिव्यदेहसमन्वितो बभूव ।" इति नृपतिर्नारदस्य वचः श्रुत्वा साश्चर्यं तत्तीर्थविषये गणेशस्य मूर्तिविषये च पुनः पप्रच्छ–"केनेयं स्थापिता मूर्तिः कुण्डोऽयं केन निर्मितः ?।" इति राज्ञो वचः श्रुत्वा नारदोऽपि राजानं पुनरुवाच–"हे राजन् ! त्रैलोक्ये परिभ्रमन्नहमेकदा शक्रं द्रष्टुममरावतीं गतः। इन्द्रो विधिवन्मां पूजयित्वोवाच–हे नारद ! त्वं सर्वत्राव्याहत-गतिः सन् भूम्यां भ्रमसि तत्रत्यं सर्वं वृत्तान्तं जानासि च । भौममहं किञ्चिदाश्चर्यं श्रोतुकामस्त्वां पृच्छामि त्वया किमपि दृष्टञ्चेत्कथय माम्" इति । अहमपि शक्रस्य तद्वचः श्रुत्वाऽकथयम्–"न त्वं श्रुत्वा क्षेमं यास्यसि । तथापि यद्दृष्टं तत्कथयामि त्वां परिभ्रमता मया । तच्छृणु सावधानतया ममेदं वचः । महर्षीणामाश्रमं परिभ्रमन्नद्य महर्षेर्गौतमस्य पवित्रमाश्रमं गतोऽहं तत्र च स्वपत्न्याऽहल्यया सह समासीनो गौतम-महर्षिर्दृष्टः । तत्राहं स्वकान्त्याऽपरिमेयलावण्यया यौवनेन च विराजमानां दृष्टिमात्रेण जगन्मोहिनीमहल्याम् ऋषिपत्नीं दृष्ट्वाऽहं मनसि किञ्चित्कामावेशितमानसः तत्कालं तस्याश्रमतोऽत्रैवाऽऽययौ । भुवनत्रयेऽपि न मयेदृशी गुणशीलरूपवती ललना दृष्टा श्रुता वा । इन्द्र ! नेदं शोभते त्वद्गृहमियममरावतीनगर्यप्येतादृशीं वनितां विनेति मां प्रतिभाति । भूम्यां मया यद्दृष्टमाश्चर्यं तत्तुभ्यं कथितम् । गम्यते च मयाधुना स्वस्ति स्यान्मे पन्था" इत्युक्त्वाऽहममरावतीतस्त्वत्समीपमुपागतः ॥

नारदस्य गमनानन्तरं शचीपतिरिन्द्रस्तामेवोपभोग्यबुद्ध्या स्वमनसा ध्यायन् महर्षे-गौतमस्याऽऽश्रमं गन्तुं मनो दधे। "कया रीत्या तया सह मम समागमो भवेत्, कदा च तस्या अधरामृतधारया ममात्मानं परमानन्दसुधामहोदधौ निमग्नं करिष्यामि" इति परिचिन्तयन् गौतमस्याश्रमं जगाम । तत्रावलोकितं तस्या अहल्यायाः प्रेक्षणीयं यथोक्तं स्वरूपं नारदेन । तपसा ज्वलन्तं तपोवनञ्च धवलीकुर्वन्तं गौतममपि दृष्ट्वा शापाद्भीतो नातिदूरे स्थित्वा केन प्रकारेण मदीयं कार्यं स्यादिति सञ्चिन्तयन् स्वयं कुक्कुटस्वरूपं धृत्वा अकाल एव कुक्कु...कू......इति उषःकालबोधकं शब्दं चकार। महर्षिर्गौतमः शब्दं श्रुत्वा उषःकालः सञ्जात इति मत्वा स्नानार्थं गङ्गामगच्छत्।

ततः शक्रः स्वयं महर्षेर्गौतमस्य स्वरूपं धृत्वा गृहाभ्यन्तरं गत्वाऽहल्यामुवाच–"हे प्रिये ! शय्यां समां कुरु" महर्षेर्वचनं श्रुत्वाऽहल्या तं प्राह "भवन्त उषसि जपं त्यक्त्वा किमर्थमत्र समागताः ?। उषःकाले शय्यायाः किं प्रयोजनम् ? व्यवायो भवति किम् ?।" अहल्याया धर्मप्रदर्शकं वचः श्रुत्वेन्द्रः पुनस्तां प्राह–"हे वरोरु !

जानामि तत्सर्वं यत्त्वयाभिहितं धर्म्यं वचः, अपि तु स्नातुं गतेन मया तत्रैकां नग्नां कांचिदप्सरां गङ्गायां विद्युल्लतामिवेतस्ततो विहरतीं दृष्ट्वा तद्दर्शनमात्रेण समुत्पन्नमनोभवविकारोऽस्नात्वैव त्वत्समीपमुपेतः । अकालेऽपि स्वामिनो मनोरथं पूरयितुं पत्न्या धर्म एव" । इति मुनेर्वचः श्रुत्वा स्वस्य भर्तुः कामबाधानिवारणायाहल्या तेन सह निःशङ्कं चुम्बनाश्लेषनीविविस्रंसनादिभिश्च विचिक्रीडे । कदाचिदप्यनाघ्रातदिव्यगन्धाऽहल्या दिव्यगन्धानुलेपनाङ्कितात् स्वभर्तुः शरीरान्निर्यान्तं सुगन्धमाघ्राय चकिता शङ्कितमना नायं मम भर्ता, अपि तु कश्चित्कूटरूपधर एवेति मनसि विचार्य "कोऽसि ? त्वं महर्षेर्गौतमस्य कूटरूपधरः कथय, अन्यथा शापेन त्वामधुनैव भस्मसात्करिष्यामि ।" इत्यपृच्छत् । शक्रस्तस्या वचः श्रुत्वा शापाद्भीतो दिव्यमाल्याम्बरधरं किरीटकटककेयूराङ्गदविभूषितविग्रहं स्वस्वरूपं धृत्वाऽहल्यामूचे–"अहल्ये ! क्षम्यतां दौरात्म्यं मदीयमिदम् । अहं देवराज इन्द्रस्त्वदीयं रूपलावण्यादिकं नारदाच्छ्रुत्वा त्वद्रूपधर्षितः कुत्रापि शं न लभे, मदीयमनःशान्त्यै मयैव त्वद्भर्तुः स्वरूपं सम्पाद्यायेदं दुष्करं दुष्टमकार्यं कर्म कृतम् । मदीयमपराधमधः कृत्वा भजस्व त्रैलोक्यस्येश्वरं मां राजधानीममरावतीञ्चायाहि" इति तां निःशङ्कमवदत् । अहल्या स्वामिनः शापभयेन भीतमना भृशं दुःखिता ज्वलन्ती त्रिदशाधिपतिं बभाषे–"हे मूढ ! अकार्यं कृत्वा पुनरपि किमिदं प्रजल्पसे ? मदीयो भर्ता सम्प्रत्यागमिष्यति । मम ते वर्ष्मणश्च कीदृशी स्थितिर्भविष्यति तत्त्वं न जानासि । अरे परस्त्रीस्पर्शपांशुल ! त्वया मदीयं पातिव्रत्यं नाशितं किं करणीयं साम्प्रतं मया त्रिदशाधम ?" इति कथयित्वा हृदयेन दूयमाना मुमोह पपात च ।

रुक्माङ्गदो नारदेन कथ्यमानं वृत्तान्तं श्रुत्वा पुनर्नारदमवदत्तदनन्तरं किं जातं तत्सर्वं समाचक्ष्व माम् । नारदश्च पुनस्तं राजानं प्राह ॥

एवमदीर्घे गते काले स्नानं विधाय महर्षिर्गौतमः समागत्य–"अहल्ये ! पादप्रक्षालनार्थं जलं देहि" इति जलमयाचत । एवं वारंवारं गौतमेन जलं याचितमप्यहल्या यदा जलं गृहीत्वा बहिर्न समागता तदा पुनरूचे–"किं ? न शृणोषि मदीयं वचः, कथं नायास्यसि बहिस्त्वम् ?" इति भर्तुर्वचः श्रुत्वा शापभयाच्छङ्किता अहल्या चोत्थाय गृहाद्बहिरागत्य जलं दत्त्वा सर्वं वृत्तान्तं भर्त्रे कथयित्वा पाणिभ्यां भर्तुः पादौ संस्पृश्य तत्र च स्वशिरो निधाय रुरोद । गौतमोऽपि स्वपत्न्या निर्व्यलीकं वचनं श्रुत्वापि क्रोधेन प्रस्फुरदधरोष्ठो–"दुःशीले अहल्ये ! त्वं शिला भव" इति शशाप ॥ ततः शापमुक्त्यै वारंवारमहल्यया याचितो गौतमः कथयामास—

**"यदा दाशरथी रामो भ्रमन् राजा वने वने ।**
**तस्याङ्घ्रिस्पर्शनादेव स्वरूपं प्रतिपत्स्यसे ॥" ग. पु. अ. ३१**

गृहाभ्यन्तरे स्थितः शचीपतिस्तु बहिःसञ्जातं स्त्रीपुंसोः संवादं महर्षिणा गौतमेनाहल्यायै दत्तं शापञ्च श्रुत्वा शापभयात् प्रवेपमानः स्वस्वरूपेण बहिर्नाययौ; किन्तु बिडालस्वरूपं धृत्वा शनैः शनैर्निर्ययौ। परञ्च त्रिकालज्ञो महर्षिर्गौतमस्तं प्राह- "हे इन्द्र! त्वं बिडालस्य स्वरूपं धृत्वा यास्यसीति किन्नाहं जाने तवेदं स्वरूपम्? न लज्जामुपैषि त्वमन्यस्य स्त्रिया सहैतादृशं विगर्ह्यं कर्म कृत्वा? धिक् ते शक्रपदतां देवानामधिपतित्वञ्च। त्वं देवानामधिपोऽसि इति कृत्वा शापेन भस्मसान्नाहं कुर्वे। परञ्च तव शरीरमनेन निन्द्यकर्मणा सहस्रभगवद्भूयात्" इत्यशपत्। ततो मुनिर्वनमगच्छच्च। बिडालस्य शरीरं शक्रस्त्यक्त्वा स्वस्वरूपं प्राप्तस्तत्कालं स्वकीयमात्मानं सहस्रभगवन्तं ददर्श। मया परस्त्रीसेवनस्य फलं लब्धमिति मन्यमानो लज्जया परं दुःखमवाप्यामरावतीं त्यक्त्वा नलिनीकुड्मलेऽतिष्ठत्।

ततः स्वर्गवासिनः सर्वे देवाः शक्रस्याभिप्रायं ज्ञात्वैकीभूय गौतमस्याऽऽश्रमं गत्वा शचीपतेरपराधक्षान्त्यर्थं वारंवारं स्तुत्या स्तुत्वा सहस्रभगानां प्रशमनाय गौतमं प्रार्थयामासुः। तेषां स्तुत्या प्रीतः क्षणिकक्रोधो गौतम उपायमाह। शचीपतेः शरीरव्रणशान्त्या उपायं वक्ष्यामि कुर्वन्तु तथा भवन्तो भविष्यति तस्य व्रणानां शान्तिः।

**"अहमेकं वदे मन्त्रं तस्मै तं प्रदिशन्तु च।**
**सर्वकर्ता सर्वहर्ता सर्वपाता कृपानिधिः॥**
**विनायको देवदेवो ब्रह्मविष्णुशिवात्मकः।**
**षडक्षरस्तस्य मन्त्रो महासिद्धिप्रदायकः॥**
**उपदेशे कृते तत्र दिव्यदेहो भवेत्तु सः।**
**भगानि तस्य यावन्ति तावान्नेत्रो भविष्यति॥**
**स्वराज्यं प्राप्स्यते शक्र इति सत्यं वदामि वः॥" ग. पु. अ. ३२**

गीर्वाणा अपि गौतमस्य वचः श्रुत्वा गौतमस्य प्रशंसां कुर्वन्तः सन्तुष्टमानसाः शक्रं गणपतेः षडक्षरं (वक्रतुण्डाय हुम्) मन्त्रं दत्त्वा शक्रं स्वर्गन्तुं प्रार्थयामासुः परञ्च "यावन्नाहं मदीयं शरीरं पूर्ववत् प्राप्स्ये तावत्कालं न यास्ये नाकलोकम्" इति देवान्कथयित्वा स्वयं तत्रैव श्रीगणेशस्य प्रीत्यै महोग्रं तपस्तेपे। अल्पेनैव कालेन प्रसन्नो गणेशस्तत्र समागत्येन्द्राय तस्य व्रणशान्त्यै वरं ददौ। पुनरपि प्रार्थितो द्वितीयमपि वरं ददौ-"इन्द्र! यत्र त्वया तपः कृतं तदिदं स्थलं कदम्बनगरं

चिन्तामणिपुरं चिन्तामणितीर्थञ्च त्रैलोक्ये प्रसिद्धिं यास्यति तथैवास्मिन्तीर्थे ये स्नानं करिष्यन्ति द्विजेभ्यो दानञ्च प्रदास्यन्ति ते धर्मादिचतुष्टयं लब्ध्वा मुक्ता भविष्यन्ति। अहमपि तत्र चिन्तामणिनामा गणेशो भूत्वा तेषां सकलान्मनोरथान् पूरयिष्यामि" इति कथयित्वाऽन्तर्धानं प्राप्तः। शक्रस्तु तत्र तीर्थे स्फटिकशिलाया गणेशप्रतिमां स्थापयित्वा सप्रदक्षिणं संपूज्य च स्वर्ययौ ॥ तत आरभ्येदं स्थलं चिन्तामणि-नाम्ना महत्सरश्च त्रैलोक्ये विख्यातमभवद्रुक्माङ्गद ! ।

एवं नारदः शक्रस्य तीर्थस्य च सर्वं माहात्म्यं रुक्माङ्गदं श्रावयित्वा गतः। रुक्माङ्गदोऽपि तीर्थं गत्वा तत्र स्नात्वा ब्राह्मणेभ्यो दानञ्च दत्त्वा गणेशं पूजयित्वा ब्राह्मणीशापेनोद्भूतकुष्ठरोगान्निर्मुक्तः स्वां राजधानीं गत्वा राज्यं चकार। अनन्तरं सपरिवारो रुक्माङ्गदो विमानं समास्थाय गणेशपुरं ययौ ॥

## त्रिपुरासुरस्योत्पत्तिः—

रुक्माङ्गदस्य गमनानन्तरमपि मुकुन्दा तु तमेव ध्यायत्यन्नं जलञ्च त्यक्त्वा कामाग्निना दह्यमाना जज्वाल परिबभ्राम च। सैकदा क्षणं क्षुत्तृट्श्रमेण निद्रां समा-ययौ। तावदिन्द्रो रुक्माङ्गदो भूत्वा मुकुन्दायाः समीपमागत्य कामार्तया कामुकया तया सह निःशङ्कं व्यङ्कुशो रेमे। ततः सा गर्भं दधे दशमे मासि पुत्रञ्च सुषुवे। तस्य पिता वाचक्नविः स्वपुत्रस्य जातकं कृत्वा "गृत्समद" इति नाम चकार। अपि पुत्रोत्पत्तिरहस्यं तु न केनापि तदा ज्ञातम्। स्वल्पेनैव कालेन स युवा वेदशास्त्र-निधिः स्वधर्मकुशलः पितुः सकाशाद्गणेशस्य "गणानान्त्वा" इति महामन्त्रं सम्प्राप्य तीव्रभक्त्या गणेशं प्रसाद्य कुशाग्रबुद्धिर्गुणनिधिः परां सिद्धिं प्राप्य सर्वत्र ख्यातिं प्राप।

एकदा मगधदेशे मगधसंज्ञकेन केनचिद्राज्ञा स्वकीयपितुः श्राद्धे सर्वेऽपि महर्षयः समाहूताः। तत्र गृत्समदोऽपि समायातः। गृत्समदस्योत्पत्तिरहस्यं ज्ञातारो महर्षयस्तत्रागतं तं वीक्ष्योचिरे–भवान् "तपस्वी" इति कृत्वा मान्योऽपि भवा-न्रुक्माङ्गदनृपतेर्वीर्याज्जातः नर्षेर्वाचक्नवेः पुत्रोऽसि किं तु जारज एवेति कारणेन मुनिसमाजेऽस्माभिः सह पूजार्हो भवितुं नार्हति" इति कथयित्वा निराकृतः। सोऽपि गृहं गत्वा मातरं मुकुन्दां पृष्टवान्–"मातः ! को मे पिता सत्यं वद नो चेत्त्वां शापेन भस्मसात्कुर्वे।" इति पुत्रस्य वचः श्रुत्वा मुकुन्दा प्राह–"हे पुत्र ! तव पितर्यनुष्ठानरतेऽमुमाश्रममागतेन रुक्माङ्गदेन नृपतिना सह मम समागमो जातस्त्वञ्चोत्पन्नस्तस्य वीर्यात्" इति। मातुर्वचः श्रुत्वा प्रकोपितो गृत्समदो "मातस्त्वं

बदरीवने असंख्येयफला कण्टकी भव" इति मातरं शशाप। साऽपि मामनादृत्य त्वयाऽहं शप्ताऽस्म्यतोऽहमपि त्वां शपामि-"हे पुत्र ! तव पुत्रोऽतिदारुणस्त्रैलोक्य-भयप्रदो दैत्यो भविष्यति"। एवमुभाभ्यामुभौ शप्तौ स्वस्वस्थानं जग्मतुः। तदाऽन्तरिक्षे वाक् प्रादुर्भूता "अयं गृत्समदो न-रुक्माङ्गदस्य नृपतेः पुत्रः किन्त्विन्द्रस्य पुत्रः रुक्माङ्गदस्वरूपेण शक्रो तया सह रेमे।" इति अन्तरिक्षोत्पन्नां वाचं श्रुत्वापि गृत्समदस्तु गणेशमन्त्रानुष्ठानाय वनं गतः। तस्य तपःप्रभावेण सन्तुष्टो गणेशस्तं कथयामास-"किमर्थं त्वं मनसि दुःखं वहसि कथय किं ते दुःखस्य कारणम्" इति गणेशस्यामृततुल्यं वचः श्रुत्वा गृत्समदोऽब्रवीत्—

**"नास्मत्पङ्क्तौ पूजनीय इति यद्दहते मनः॥" ग. पु. अ. ३७**

गणेशोऽपि गृत्समदस्य वचनं श्रुत्वा प्राह। "नात्र त्वया मनसि विचारः कार्यः। त्वं तु सर्वत्र पूज्यो मान्यश्च भविष्यसि भुवनत्रये; तथैव तव पुत्रोऽपि सर्वदेवानां भयङ्करो बलवान् त्रैलोक्ये ख्यातिं यास्यति। इदं स्थलमपि"

**"त्रेतायां मणिपुरं च मानकं द्वापरेऽपि च।**
**कलौ तु भद्रकं नाम ख्यातं लोके भविष्यति॥" ग. पु. अ. ३७**

इत्युक्त्वान्तर्दधे॥ तत आरभ्य सर्वेऽपि मुनयस्तं गृत्समदं सन्मानेन स्वपङ्क्तौ स्थानं ददुः। गृत्समदोऽपि तत्र स्थले गणेशप्रतिष्ठां प्रासादञ्च कारयित्वा प्रत्यहं गणानान्त्वेति मन्त्रं जपन् तपश्चर्यामकरोत्। स एकस्मिन्नहनि दिशो नभः पृथ्वीं गिरिगह्वराँश्च स्वनिनादेन प्रकम्पयन्तं स्वसमीपे बालकं ददर्श। कोऽयमिहागतः। अथवा गणेशेन ममाद्भुतः पुत्रः प्रदत्तः किम्? इति तर्कयामास। तावत्स बालकस्तं स्वपितरं गृत्समदं प्राह-"त्वं तु सर्वज्ञो ज्ञानेन सर्वं जानास्यपि किमर्थं मां पृच्छसि? तथापि ते कथयामि।"

**"त्वमेव जनको माता कृपां कुरु ममोपरि।**
**पालयस्व पितर्मां त्वं दिनानि कतिचिन्मुने॥"**
**त्रैलोक्याक्रमणे शक्रं देवेन्द्रं वशवर्तिनम्।**
**करिष्यामि न सन्देहो वीक्ष्यसे पौरुषं मम॥" ग. पु. अ. ३८**

गृत्समदः स्वपुत्रस्य जातमात्रेणापौरुषेयीं शक्तिं वाचञ्च श्रुत्वा परमहर्षेणात्मानं कृतकृत्यं मन्यमानस्तं बालकं ॐ गणानान्त्वेति मन्त्रस्योपदेशं विधाय तमपि तन्मन्त्रस्यानुष्ठानार्थं प्रेषयामास। सोऽपि मनसा गजाननं ध्यायन् निराहारो

जितेन्द्रियोऽङ्गुष्ठाग्रेण भुवं सम्पीड्य सार्धायुतानि वर्षाणि दिशो ज्वलन्तेपे। तस्योग्रतपसा परितुष्टो गणेशस्तत्रागत्य–"हे पुत्र! देवदानवगन्धर्वयक्षराक्षसादिसमन्वितं त्रैलोक्यं ते वश्यं भूयात्" इति तं वरप्रदानेनातोषयत् तथैव पुरत्रयमदाच्च।

**"आयसं काञ्चनं रौप्यं मया दत्तं पुरत्रयम्।**
**अभेद्यं सर्वदेवानां कामगं शङ्करं विना॥**
**त्रिपुरेति च ते नाम ख्यातिं लोके गमिष्यति।**
**यदैकेन बाणेन शिवो भेत्स्यति ते पुरम्॥**
**तदैवायास्यसे मुक्तिं नात्र कार्या विचारणा॥**
**अन्यत्ते वाञ्छितं सर्वं मत्प्रसादाद्भविष्यति॥" ग.पु.अ. ३८**

ततः स त्रिपुरासुरमित्यभिधानं गणेशात्प्राप्य सर्वशक्तिसमन्वितो गृत्समदस्य पुत्रः श्रीगणेशस्य तत्रैव काश्मीरपाषाणमयीं मूर्तिं स्थापयित्वा गणेशपुरञ्च कारयामास। ततः स्वयं समाक्रम्य भुवो मण्डलममरावतीञ्च जगाम। तत्रेन्द्रेण सहानेकविधं युद्धं कृत्वा स्वर्गमिन्द्रञ्च वशं निन्ये। तदा देवाश्च नानाविधरूपधरा हिमवद्गिरिगह्वराणि ययुः। ततस्त्रिपुरासुरः स्वपुत्रं प्रचण्डं ब्रह्मलोकाधिपत्ये चण्डं च वैकुण्ठलोकाधिपत्ये स्थापयित्वा स्वयं युद्धाय कैलासं प्रययौ। तत्र गत्वा प्रथमं दोर्भ्यां कैलासमचालयत्।

**"भयभीता च गिरिजाऽऽलिलिङ्गे शङ्करं भृशम्।**
**तेन तुष्टो महादेवो दैत्यस्य पौरुषेण च॥**
**ददर्श त्रिपुरं दैत्यं वरं वृण्वित्यथाब्रवीत्॥" ग. पु. अ. ४०**

एवं त्रिपुरासुरः परितुष्टाच्छिवात्कैलासमयाचत। शिवोऽपि कैलासं तस्मै दत्त्वा स्वयं स्वगणैरुमया च सह मन्दराद्रिं जगाम। एवमनायासेन कैलासमवाप्य त्रिपुरासुरः परमं हर्षं प्राप्तस्तत्रैव कतिचिद्दिनानि निवासं चक्रे।

ततो दिवौकसः स्वकार्यसिद्ध्यर्थं दिवस्पतिं पुनस्त्रिविष्टपे स्थापयितुञ्च षडक्षरमन्त्रमेकाक्षरमन्त्रं गणानान्त्वेति मन्त्रञ्च प्रजपन्तः श्रीगणेशस्याराधनं चक्रुः। परितुष्टो गणेशो देवानां कार्यसिद्ध्यर्थं कलाधराख्यं विप्ररूपं धृत्वा त्रिपुरासुरस्य समीपं गत्वा सहर्षं त्रिपुरासुराय तद्रक्षणार्थं तिस्र आयसीकाञ्चनीरौप्याः पुरीः निर्माय ददौ। तेन तुष्टस्त्रिपुरासुरस्तं कलाधरनामानं विप्रमूचे "त्वमपि मत्तो यथेच्छं वरं वृणु" इति। ततः कलाधरस्तं प्रत्यूचे–"यदि त्वं प्रसन्नस्तदा शिवः प्रत्यहं यां गाणेशीं चिन्तामण्यभिधां मूर्तिं पूजयति तामानीय मे देहि।" तद्वचनं श्रुत्वा प्रथमं तु त्रिपुरासुरो

दूतवाक्येन शिवं स्वसन्देशं प्रेषयामास। क्रुद्धः शिवोऽप्यागतं दूतं "नेयं मूर्तिस्तेन शक्या प्राप्तुं जन्मशतैरपि" इति कथयित्वा तिरश्चकार। उभयोस्तदनन्तरं महायुद्धं जातम्। शिवं विजित्य त्रिपुरासुरः कैलासं गत्वा तां मूर्तिमादाय स्वं पुरं गच्छतस्तस्य हस्तात्सा पथ्येवान्तर्हिता। ततस्त्रिपुरासुरो गणेशमूर्तेरन्तर्हितत्वमेवापशकुनं मत्वा युद्धान्निवृत्तो विमना भृशं चिन्तामापन्नः स्वपुरत्रयं प्राप।

## त्रिपुरासुरनाशार्थं गणेशसहस्रनामोपदेशः—

शिवोऽपि युद्धे तेन पराजितमात्मानं मन्यमानो चिन्तयामास। केनोपायेन तस्य पराजयः कुर्यामिति। एवं चिन्तयतः शिवस्य सन्निधौ नारद आजगाम। तं दृष्ट्वा शिवः पप्रच्छ–"देवानां मम च पराभवे किमत्र कारणम्" इति। नारदः प्राह—

**"युद्धाय गन्तुकामेन नार्चितो गणपस्त्वया।**
**अतः पराभवं प्राप्तोऽस्यग्निनेत्रपिधानधृक्॥**
**इदानीमर्चय पुरा विघ्नेशं विघ्नवारणम्।**
**प्रसादं तद्वरं लब्ध्वा याहि युद्धाय सादरम्॥**
**पराजेष्यसि तं दैत्यं नात्र कार्या विचारणा॥"** ग. पु. अ. ४४

ततस्त्रिनेत्रः शिवो गणेशध्यानतत्परः सन् महोग्रं दश वर्षाणि तपश्चर्यां कृत्वा गणेशं तोषयामास। ततः शिवः स्वमुखादेवोत्पन्नं पुरःस्थितं स्वस्वरूपं दृष्ट्वा शशङ्के।

**"ततस्तस्य मुखाम्भोजान्निर्गतस्तु पुमान् परः।**
**पञ्चवक्त्रो दशभुजो ललाटेन्दुः शशिप्रभः॥**
**मुण्डमालः सर्पभूषो मुकुटाङ्गदभूषणः।**
**अग्न्यर्कशशिनो भाभिस्तिरस्कुर्वन्दशायुधः।**
**तद्भासा धर्षितो देवोऽपश्यदुग्रं पुरःस्थितम्॥**
**विनायकं पञ्चमुखं पञ्चास्यमपरं शिवम्।**
**तं दृष्ट्वाऽतर्कयद्देवः किमिदं द्विविधोऽभवम्॥**
**अथवा मे वरं दातुमागतोऽयं गजाननः।**
**सर्वविघ्नहरं देवं यं ध्यायामि दिवानिशम्॥"** ग.पु.अ. ४४

ततः प्रसन्नो गणेशः शिवं वरं ददौ–"त्रिनेत्र! त्वं त्रिपुरासुरेण सह पुनर्युद्धं कुरु, मन्नामबीजमन्त्रेणाभिमन्त्रितेनैकेन बाणेन तं नाशय भविष्यति त्रिपुरासुरस्य पुरत्रयस्य च समूलो विनाशः"। एवमुक्त्वा गणेशो लोकानां हितकाम्यया पुनश्च तं शिवं स्वनाम्नां सहस्रमपि कथयित्वाऽगच्छत्।

"ततः स्वनाम्नामवदत् सहस्रं गणाधिपोऽस्मै प्रणताय सम्यक् ।
शिवस्य भक्त्या परितुष्टचित्तो जयप्रदं कामकरं जनानाम् ॥"
"उवाच चैनं रणकाल एतत्पठस्व दैत्यान्विनिहंसि शीघ्रम् ॥
त्रिसन्ध्यमेतस्य जपान्नराणां सिद्ध्यन्ति कामाः सकला अभीष्टाः ॥"

ग. पु. अ. ४५

अनन्तरं गणेशोऽप्यन्तर्धानं प्राप । शिवोऽपि गणेशस्य सहस्रनाम्नां पाठेन परं सिद्धिं समवाप्य देवैः सह युद्धाय त्रिपुरासुरमगच्छत् । तस्य पुरत्रयमेकेन बाणेन ददाह; तञ्च हत्वा त्रिदशैः संस्तुतः स्वयं कैलासं त्रिदशाश्च स्वं स्वं स्थानमगच्छन् ॥

तत आरभ्य त्रिलोकेऽस्य गणेशसहस्रनाम्नां स्तोत्रपाठस्य न केवलं मङ्गलकर्मणि किन्तु प्रवासे सङ्ग्रामे सङ्कटे गर्भरक्षायां परकृत्याप्रशमने परचक्रविध्वंसने दुर्भिक्षादिसकलबाधानिवारणे च प्रयोगाः कर्मकाण्डकुशलैर्मन्त्रतन्त्रविद्भिर्भूसुरैः प्रत्यहं क्रियन्ते । प्राप्यते च यथोक्तं फलं स्तोत्रपाठस्य षडक्षरमन्त्रस्यैकाक्षरमन्त्रस्य गणानान्त्वेति वैदिकमन्त्रस्य च तैः ।

## नार्थज्ञानाभावे कस्यापि गद्यपद्ययोः सविशेषं फलम्

प्रायो यस्य कस्यापि सूक्तस्य स्तोत्रस्य मन्त्रस्य वा फलं श्रद्धयाऽऽप्तवाक्यप्रामाण्येन च कर्तारः प्राप्नुवन्ति । परञ्च यथा स्तोत्रस्य मन्त्रस्य वा तदर्थज्ञानानन्तरं, न तथा तदर्थज्ञानाभावे केनापि तस्य सविशेषं फलं लभ्यते तत्र प्रवृत्तिर्वा क्रियते । अस्य श्रीगणेशसहस्रनामस्तोत्रस्यैकैकनाम्नो मन्त्रत्वं तन्त्रशास्त्रेषु प्रतिपादितं तेषां ज्ञानं भाष्यमन्तरा सुस्पष्टतया ज्ञातुं प्रायः सर्वेषां दुःशकमेवेति मन्ये । यथा—

"सर्वविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजाश्रयः ।
लिपिपद्मासनाधारो वह्निधामत्रयाश्रयः ॥"

श्लोकोऽयं सहस्रनामान्तर्गतः । अस्य यथार्थज्ञानमज्ञातमन्त्रतन्त्रशास्त्रज्ञानेन न केनापि विदुषा स्वबुद्ध्या कर्तुं प्राप्तुं वा शक्यत एव । एवंविधान्यस्मिन् गणेशसहस्रनामस्तोत्रे बहूनि पद्यानि सन्ति । उपासकानां तत्तत्पद्यानां पदानाञ्च यथा साकल्येन बोधः स्यादिति विचार्य अस्मिन्स्तोत्रे पदवाक्यप्रमाणपारावारपारीणैः पण्डितप्रवरैर्भारत्युपनामकैः सर्वतन्त्रस्वतन्त्रैस्तान्त्रिकधौरेयैः श्रीमद्भास्कररायदीक्षिताभिधेयैर्मन्त्रतन्त्रशास्त्रानुसारि "खद्योतनामकं भाष्यम्" विरच्योपासकानामुपर्यविस्मरणीयो महोपकारः कृतो यो न कदापि विस्मरणीयस्तैरुपासकैः ।

अद्य तु सन्दृश्यते मन्त्रतन्त्रशास्त्रज्योतिषशास्त्राऽऽयुर्वेदशास्त्राणां च ह्रासो विनाशश्च भारते नान्यस्योपदेष्टृणां स्वकीयस्वार्थसंसिद्ध्या एव तत्तच्छास्त्रस्य प्रयोगकर्तृणां पण्डिताधमानां किल्बिषेन। अद्यावध्यनेन पापेनैव नन्दनवनसमम् अजनाभक्षेत्रं भारतवर्षं पारतन्त्र्यनिरये विलीनमासीत्। ईश्वरकृपयाधुना प्राप्तेऽपि स्वराज्ये पराधीनत्वं तु तथाविधं दरीदृश्यत एव तत्तद्विषयेषु भारतीयानाम्। पुरः समागत्य तत्तच्छास्त्रविद्भिः स्वहृदि स्थापितं तत्तच्छास्त्रविषयं ज्ञानं बहिर्निष्कास्य सर्वेषामुपकारो भवेत्तथा संस्थाप्य तत्तद्विषयेष्वद्यावधि सञ्जृम्भितं पारतन्त्र्यं सर्वतः संहृत्य बहिः प्रक्षेपणीयम्। दुर्गमोऽयं कलिः, यस्मिन्कर्मक्षेत्रे भारतवर्षे देवा अपि स्वर्गं हित्वा स्वकीयं जन्म भवेदिति प्रार्थयन्ति तस्य भारतवर्षस्य चाद्य कीदृशी परावलम्बना दृश्यते, यामवलोक्य कस्य हृदयं दुःखेन समाक्रान्तं न भवति। यथाऽऽसीदिदं भारतक्षेत्रं ततोऽप्यधिकतरं सुसंस्कृतं सर्वविद्यायां पुरःसरत्वञ्च प्राप्नुयादिति श्रीपरमेश्वरमभ्यर्थये।

## पण्डितवराणां श्रीमद्भास्कररायदीक्षितान्निचितां परिचयः—

श्रीमद्भास्कररायदीक्षितानामभिधानं तेषां पाण्डित्यञ्च के न जानन्ति निगमागमेषु सर्वशास्त्रविषयेषु। यैर्ललितासहस्रनाम्नामुपरि सौभाग्यभास्करनामकं भाष्यं निर्माय ललितोपासकानां स्वोपास्यदेवतास्वरूपज्ञानार्थं कदाप्यविस्मरणीया महती उपकृतिततीः कृता इति मन्ये।

पूज्यपादानां गुरुतुल्यानां भारत्युपनाम्नां श्रीमद्भास्कररायदीक्षिताग्निचितां दीयते प्राप्तः परिचय ऐतिह्यो मया। श्रीभास्कररायदीक्षिताग्निचितो बीजापुरनिकटवर्तिकर्णाटकप्रदेशाभिजनाः। तेषां पितृचरणाः श्रीगम्भीररायदीक्षिता अपि निगमागममन्त्रतन्त्रविदः सोमयाजिन आसन्। ते च राजनीतिकुशला इति विज्ञायाऽऽहूय बीजापुरप्रान्तस्य यवनराज्ञा ताँश्च स्वपुरे सचिवपदवीं प्रदाय स्थापिताः स्वराज्यसंरक्षणाय। ते च सर्वेषु वर्णेषु समानां नीतिं धृत्वा स्वबुद्धिचातुर्येण बीजापुरस्य राज्यधुरं समूह्य राज्यं चक्रुः। तेषां सुपुत्रास्ततोऽप्यधिकगुणगणैर्युक्ता "यथा नाम तथा गुणाः" श्रीमद्भास्कररायदीक्षिताग्निचिता मन्त्रतन्त्रशास्त्रेषु पारीणा आसन्।

पूज्यपादैः श्रीमद्भास्कररायमहोदयैरप्यनेकेषु विषयेषु स्वयमनेकान् ग्रन्थान्विरच्य न केवलं तत्तद्विषयामृतेच्छूनामुपरि किन्तु तत्तच्छास्त्रमर्मप्रदर्शनेन तच्छास्त्ररक्षाया अपि महोपकारः कृतः। तैः परदेवतायाः श्रीललितादेव्याः प्रार्थ्यर्थं

तत्तदाचार्यवर्यैर्निर्दिष्टेषु मार्गेषु "रुचीनां वैचित्र्यात्" इति न्यायेन तत्तन्मार्गाभिरुच्या प्रवर्तमानानां तत्तद्विदुषामुपकृत्यै तत्तन्मार्गप्रवृत्तिद्वारापि परदेवतोपासनया स्वाभिलषिताखिलार्था अप्यवाप्यन्ते इति सुस्पष्टतया स्वयं विरचिते "सौभाग्यभास्करे" प्रतिपादितमेव। नात्र तैर्वाममार्गस्योत दक्षिणमार्गस्य हेयत्वाहेयत्वयोर्मध्येऽस्योपादेयत्वमन्यस्यानुपादेयत्वं वा प्रतिपादितम्। तैः श्रीसप्तशत्या उपरि गुप्तवत्याख्याप्यत्युत्तमा भगवत्युपासकानां तन्मार्गप्रदर्शिका टीका विरचिता। तत्र कया रीत्या सप्तशत्याः पाठः कार्य इत्यपि विस्पष्टतया प्रतिपादितम्। तैर्भगवत्युपासनाद्वारा वैद्यशास्त्रोपजीविभिर्ये असाध्याः कुष्ठरोगादयो मतास्तेऽपि विखण्डिता एव। कृष्णानद्याः प्रवाहोऽपि यैः स्वनिवाससदनसन्निधौ सूर्यस्याराधनद्वाराऽऽनीतः यैश्च तत्कालीया अनेके नृपतिवर्याः स्वशिष्याः कृता इत्यपि कर्णाकर्णिकानुश्रूयते। ते च गुर्जरप्रान्तं समवाप्य सुरतनगरनिवासिभ्यः प्रकाशानन्दनाथदीक्षानामभ्यो शिवदत्तशुक्लेभ्यो गुर्जरब्राह्मणेभ्यः पूर्णाभिषेकं सम्प्राप्य परदेवतायाः साक्षात्कारं च कृत्वा स्वयमवनिमण्डलं परिभ्रमन्स्वकीयपाण्डित्येन सर्वानपि विदुषो ज्ञानामृतमहोदधौ निमग्नाञ्चकार। न तेषां सम्पूर्णतया कोऽपि यथाविधं परिचयं दातुं समर्थः। तैर्विरचितेषु तत्तद्भाष्येषु ग्रन्थेषु च तेषां पाण्डित्यं दृश्यते सर्वैरङ्गीक्रियते प्रशस्यते चामुक्तकण्ठं विद्वत्त्वम्॥ तैरेवैतेषां गणेशसहस्रनाम्नामुपरि "खद्योतनामकं भाष्यं" विरच्य महोपकारः कृतः।

अस्य भाष्यस्य प्राप्तौ कृतपरिश्रमाः **श्रीमद्राम नारायण आचार्या** अपि न विस्मर्तुं योग्याः। ते च निर्णयसागरे ग्रन्थानां संशोधनाय स्थापितेषु विद्वत्सु पुरस्सराः। निर्णयसागरमुद्रणालयोऽद्य न केवलेऽस्मिन्भारते किं तु यूरोपीयदेशेष्वपि सद्ग्रन्थप्राप्त्यादिविविधैः कारणैर्दिवाकर इव प्रकाशते। तत्र ते च कुशलया स्वबुद्ध्या शास्त्राभ्यासेन च कुर्वन्ति संशोधनं तत्र तत्र टिप्पण्यादिकं च। तथैवालभ्यान्ग्रन्थानानीय समुपस्थाप्यन्ते तज्ज्ञानामुपकाराय। अयमुपकारो न विस्मर्तुं योग्यस्तेषाम्। अद्यावधि कुत्राप्यप्रकाशितः सभाष्योऽयं ग्रन्थः प्रथमत एवोपाह्रियते। श्रीमद्भास्कररायदीक्षिताग्निचिद्भिर्विरचितमिदं "खद्योतनामकं भाष्यम्" सिद्धिविनायकोपासेकभ्यस्तान्त्रिकदृष्ट्या ग्रन्थहृद्यावगमे सुकरं स्यादिति टिप्पण्यादिभिश्चालंकृत्य प्रकाशितोऽयं ग्रन्थः सर्वैः संग्राह्य इति निवेदयति–

विदुषामनुचरः,

**आचार्योवटङ्कः अमृतलाल त्रिकमजी शास्त्री.**

(जामनगरनिवासी)

# गणेशसहस्रनाम

## भास्कररायदीक्षितप्रणीतभाष्यसमेतम्

– भाष्यकर्तुर्मङ्गलाचरणम् –

गणेशो वः पायात् प्रणमत गणेशं जगदिदं
गणेशेन त्रातं नम इह गणेशाय महते ॥
गणेशान्नास्त्यन्यत्त्रिजगति गणेशस्य महिमा
गणेशे मच्चित्तं निवसतु गणेश ! त्वमव माम् ॥ १ ॥

गुरुरेव गतिर्गुरुमेव भजे गुरुणैव सहास्मि नमो गुरवे ॥
न गुरोः परमं शिशुरस्मि गुरोर्मतिरस्ति गुरौ मम पाहि गुरो!॥२॥

– भाष्यकारप्रतिज्ञा –

प्राचां कुसृष्टिरचनैकमयस्वभावा-
मज्ञातगाणपततन्त्रपुराणभावाम् ॥
व्याख्यामुदस्य सुविभाव्यगणेशनामा-
न्यर्थापयामि तदुपासकतोषहेतोः ॥ ३ ॥

नन्वर्था नाम्न्यनंताः फणिपतिधिषणा शक्यकृत्स्नप्रकाशा
मन्दस्तत्र प्रवृत्तोऽप्युपहसितपदं स्याज्जनस्येति चेन्न ॥
यत्तार्क्ष्यद्योमणिभ्यामपि दुरधिगमं कृत्स्नशो दुष्प्रकाशं
तत्खद्योतः पतन् खं किमपि विशदयत्येव नेहास्त्यवद्यं ४

नाम्नामर्थश्चिदाकाशस्तं द्योतयितुमुद्यतः ।
ग्रन्थः खद्योतनामाऽस्तु ब्रह्म खं गगनं च खम् ॥ ५ ॥

केषां न दुष्करं नाम्नां साकल्येनार्थवर्णनम् ।
अतः संक्षिप्य वक्तव्ये श्लोकैरेव स वर्ण्यते ॥ ६ ॥

– मतान्तरविचारः –

इह खलु सर्ववेदान्तसंवेद्यमखण्डं सत्-चित्-आनन्दं निरस्तत्रिविधभेदमवाङ्मनसगोचरं स्वप्रकाशं मुक्तोपसृप्यं परं ब्रह्म। तन्निर्विकल्पेन तद्विषयकसविलासाज्ञाननिवृत्त्या कण्ठचामीकरन्यायेन तदात्मतावाप्तिरूपो मोक्ष इत्यविवादम्। स च निर्विकल्पः शुद्धचित्तानामेव न मलिनाशयानाम्; चित्तशुद्धौ तु श्रौतस्मार्तकर्माणि तत्तद्वर्णाश्रमोचितानि वेदे कर्मकांडसमधिगम्यानि बहिरङ्गोपायाः। तस्यैव ब्रह्मणः सगुण-निर्गुणभेदेन द्विविधस्योपासनानि वेदे रहस्यतरोपनिषत्कांडसमधिगम्यानि अन्तरङ्गोपायाः। बहिरङ्गानुष्ठानशीलानामेव त्वन्तरङ्गानुष्ठानेऽधिकारः, सगुणं तु रूपमुपासकानुग्रहार्थं कल्पितमेवेत्युपासकरुचिवैचित्र्येण नानाविधम्। तेषु 'आदित्यमंबिकां विष्णुं गणनाथं महेश्वरम्' इति स्मृत्युक्तरूपाणि तत्तदवांतरमूर्तिभेदाश्च तत्तज्जन्मायातत्संस्कारानुगुण्येनोपास्यानीति सर्वेऽपीश्वरा एव। अत एव पुराणान्यपि तत्तदुपासकानुजिघृक्षया प्रवृत्तानि तस्य तस्यैव सर्वोत्तमत्वम्; अन्येषां ततोऽपकर्षं च नहिनिंदान्यायेन प्रतिपादयंति कल्पभेदेनैकस्मादन्येषामुत्पत्तिः संभवतीत्यादिकमाकरेषु स्पष्टम्; तत्र गणपतिविषये हेरंबोपनिषद्गणेशोपनिषदाद्याः[१] श्रुतय ऐदंपर्येण गाणपततन्त्राणि गणेशोपपुराणं पुराणान्तरेष्वपि तत्र तत्र सर्वोत्तमत्वनिरूपणभागाश्चेति शतशः प्रमाणानि तत्तद्विदां स्पष्टानि। एतेन निघण्टुग्रन्थेऽग्न्यादिदेवपत्न्यन्तदेवतानां मध्ये गणपते-

---

टिप्प०–१ इदं ह्युपनिषत्त्रयमस्मत्संपादित'त्रिंशत्युत्तरशतोपनिषत्संग्रहे' क्रमशः ९२-१०९-११० संख्याकं द्रष्टव्यम्।

रनिर्देशादसत्त्वमाशंक्य 'मरुतो गणानामधिपतये' इत्यभ्याताननमंत्रे कथनात्सत्त्वसमर्थनं प्राचामपास्तम्; कर्मकाण्डीयदेवतामध्ये गणनाभावस्याप्रयोजकत्वात्, तत्रैकपंचाशदधिकशतदेवतानामेव गणनेन ततोऽधिकानां परःशतदेवतानां वेदे पुराणेषु च प्रसिध्दानामसिद्ध्यापत्तेः; 'वायु'पदस्य सूत्रात्मनि क्वचित्प्रयुक्तत्वेन तत्पर्याय-'मरुत्'शब्दस्य बहुवचनान्तस्यापि परमेश्वरपरत्वसमर्थनप्रयासस्य क्लिष्टतरत्वात्। उपनिषदां प्रमाणमूर्धन्यानां सत्त्वेऽप्येवं प्रमाणगवेषणस्य करभमनुसरामः। 'कामधेनौ स्थितायाम्' इति न्यायेन निरसनीयत्वात्। 'पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः' इत्यादिबृहन्नारदीयादिवचनेनार्थवादशून्यपुराणानामर्थवादजटिलं कर्मकाण्डमपेक्ष्य तत्त्वनिर्णये प्रबलत्वात्। 'श्रुतिस्मृती हि नेत्रे द्वे पुराणं हृदयं मतम्। श्रुतिस्मृतिभ्यां हीनोऽन्धः काणः स्यादेकया विना। पुराणहीनाद्धृच्छून्यात्काणान्धावपि तौ वरौ' इत्यादिवचनैर्देवतातत्त्वनिर्णये कर्मकाण्डमपेक्ष्य पुराणानामेवाधिक्यस्य भक्तिमीमांसातंत्रे समर्थितत्वात्। शिवविष्णुदेवीविषयकाणामिव गणपति विषयाणामुपनिषदामपि जागरूकत्वाच्च। कर्मकाण्डेऽपि अभ्याताननामत्र कदर्थनमपेक्ष्य स्पष्टतरस्य 'गणानां त्वा' इति मंत्रस्य वेदत्रयेऽपि पठ्यमानस्य शरणीकर्तुं युक्तत्वाच्चेति दिक्।

तदुपासनं चैकाक्षरषडक्षराष्टाविंशत्यक्षरादिबहुविधगणपतिमंत्रजपादिरूपं बहुविधम्; तदंगत्वेन क्रत्वर्थः। स्वतंत्रतया पुरुषार्थश्च सहस्रनामस्तवपाठोऽपि सहस्रनामस्तवस्यापि पुराणतंत्रभेदेन बहुविधस्य मध्येऽयमेव बहुभिरुपासकैः परिगृहीत इत्ययमेव व्याक्रियते ॥

– एतद्ग्रन्थपरिचयः –

अयं च स्तवः पद्मपुराणीय इति प्राचो व्याचक्षते। गणेशपुराणे तु बहुभिरवलोक्यते। गणेशपुराणे तावदुपासनाखण्डे–'अष्टादशपुराणानि विस्तराच्छ्रावितानि नः। अन्येषामपि शुश्रूषा वर्तते वह्निसंभवा' इति सूतं प्रत्यृषीणां प्रश्ने सूतवाक्यम्–'अन्यान्युपपुराणानि वर्ततेऽष्टादशैव तु। गाणेशं नारदीयं नारसिंहादिकान्यपि' इत्युक्त्वा पुनर्गणेशपुराणे मूलप्रश्नस्योत्तरम्–'ब्रह्मणा कथितं पूर्वं व्यासायामिततेजसे। भृगवे कथितं तेन सोमकान्ताय तेन च' इत्यादिना पुराणमवतार्य कतिचिद्व्याख्यानानि निर्वर्ण्य षट्त्रिंशमध्यायमारभ्य गृत्समदोपाख्यानं प्रवर्तितम्। तदीयक्षुतात् त्रिपुरासुरस्योत्पत्तिस्तस्य तपस्तस्मै वरदानं तस्य त्रैलोक्यजयः शिवेन सह युद्धं शिवपराजयो नारदं प्रति शिवकृतप्रश्नेत्येतावदुक्त्वांते नारदवाक्ये–'युद्धाय गन्तुकामेन नार्चितो गणपस्त्वया। अतः पराभवं प्राप्तोऽस्यग्निनेत्रपिधानधृक्' इत्यादि। ततः सोऽतप्यत तपोऽत्युग्रं दशवर्षाणि शंकरः। ततस्तस्य मुखांभोजान्निर्गतोऽभूत्पुमान् परः। पञ्चवक्त्रो दशभुजो भालचन्द्रः शशिप्रभः। मुण्डमालः सर्पभूषो मुकुटाङ्गदभूषणः। अग्न्यर्कशशिनो भाभिस्तिरस्कुर्वन् दशायुधः।' इत्यादिना गणेशाविर्भावतत्प्रसादवरदानादिकमुक्त्वा, 'ततः स्वनाम्नामवदत् सहस्रं तस्मै गणेशः प्रणताय दिव्यम्। शिवस्य भक्त्या परितुष्टचित्तो जयप्रदं कामकरं जनानाम्॥' इत्यादिना तपःसमाप्तिः पञ्चचत्वारिंशेऽध्याये वर्णिता।

तत उत्तरेऽध्याये ब्रह्माणं प्रति व्यासकृतप्रश्नः

व्यास उवाच ॥

कथं नाम्नां सहस्रं स्वं गणेश उपदिष्टवान् ।
शिवायै तन्ममाचक्ष्व लोकानुग्रहतत्पर ! इति ॥

ततः—ब्रह्मोवाच ॥

'देव ! एवं पुरारातिः' इत्यादिश्लोकचतुष्टयेन पूर्वोक्तविस्तृतकथायाः संक्षेपेणानुवादः। तदिदं स्तोत्रं गणेशपुराणे षट्चत्वारिंशत्तमाध्यायरूपम्। अत्र पूर्वपीठिकाभागः पंचश्लोकात्मकः। मध्ये नामभागः सार्धषट्षष्ट्युत्तरशतश्लोकात्मकः । अन्त्यः फलश्रुतिभागः सार्धत्रिचत्वारिंशच्छ्लोकात्मकः । संहत्य पञ्चदशोत्तरे द्वे शते श्लोकानामुक्त्वा सप्तचत्वारिंशेऽध्याये पुनर्युद्धं त्रिपुरसंहारादिकं चोक्त्वा त्रिपुराख्यानमुपसंहृतमिति स्थितिः । पद्मपुराणीये तु पाठे पूर्वपीठिकायां प्रथमश्लोको नास्ति । द्वितीयश्लोके 'देवः पूर्वम्'इति पाठः । फलश्रुतौ यो 'नामभिर्हुनेदेतैः' इत्याद्याश्चत्वारः श्लोका न सन्ति इति । दशोत्तरैव शतद्वयीति विशेषः ।

अस्य स्तोत्रस्य महागणपतिरेव मंत्रद्रष्टृत्वादृषिः, प्रतिपाद्यत्वाद्देवता च, अनुष्टुप् छंदः, गंबीजं, हुंशक्तिः, स्वाहा कीलकम्, चतुर्विधपुरुषार्थसिद्ध्यर्थे जपादौ विनियोगः । गांगीं इति षट् दीर्घैः षडंगानि। 'पञ्चवक्त्रो दशभुजः' इत्यादि पूर्वोक्तं ध्यानमिति द्रष्टव्यम् ॥

– अथ श्लोकव्याख्या –

व्यासप्रश्नः स्पष्टार्थः ॥ एवं व्यासेन पृष्टमर्थं दीनजनानु-

जिघृक्षयोपदिदिक्षुर्भगवान् ब्रह्मा 'सहस्रनाममंत्रोऽयं जपितव्यः शुभाप्तये' इति मंत्रजपं विधास्य गुरुसंप्रदायशुद्धिमन्तरेण लब्धस्य फलानावहत्वाद्गुरुपरंपराज्ञानावश्यकत्वं ध्वनयितुमाख्यायिकां पूर्वं विस्तृत्य वर्णितानामपि पुनः संक्षिप्यानुवदति–देव इत्यादिना ।

॥ व्यास उवाच ॥ कथं नाम्नां सहस्रं स्वं गणेश उपदिष्टवान् । शिवायै तन्ममाचक्ष्व लोकानुग्रहतत्पर ! ॥१॥ ब्रह्मोवाच ॥ देव एवं पुरारातिः पुरत्रयजयोद्यमे । अनर्चनाद्गणेशस्य जातो विघ्नाकुलः किल ॥ २ ॥ ॥

एवं पूर्वाध्यायैरुक्तरीत्या उक्तं च–'गुरुक्रममविज्ञायोपास्ते यः स्वेष्टदेवताम् । सोपास्तिर्निष्फला ज्ञेया भस्मन्यर्पितहव्यवत् । तस्माद्यत्नेन विज्ञेया मूलाद्गुरुपरंपरा' इति । सा यथा–सर्वेषां गाणपतमंत्राणां आदिगुरुर्गणेश एव । ततो गणक्रीडस्ततो विकट इत्यादिक्रमेण कुलाख्या गुरवो नव । ततः सुरानन्दादयो विद्यागुरवोऽपि नव । ततः संतानगुरवो विनायकादयो विंशतिः । एतेषु प्रत्येकं दिव्यौघा सिद्धौघा मानवौघाश्चेति त्रेधा विभागो गुरुमुखादवसेयः । तत्पश्चात्कपिलादिव्यासपर्यन्ता एकविंशतिः । ततो गणकादिशंकराचार्यांता द्विचत्वारिंशत् संभूयैकोत्तरं शतं गुरवो विद्यारण्यश्रीपादैर्विद्यार्णवे प्रतिपादिताः । तेषां विशिष्टनामानि तत्रैव द्रष्ट-

व्यानि । प्रायेणास्मिंस्तोत्रे प्राथमिकनामशतद्वयमध्ये तानि सर्वाणि व्यक्तीभवन्तीति रहस्यम् । शङ्करभगवत्पादेभ्योऽर्वाचीना तु स्वनाथपर्यंता गुरुपरंपरा स्वस्वदेशिकमुखादेवावगन्तव्या ॥

गुरूपसदनक्रममाह—महागणपतिमिति ।

मनसा स विनिर्धाय ततस्तद्विघ्नकारणम् । महागणपतिं भक्त्या समभ्यर्च्य यथाविधि ॥ ३ ॥
विघ्नप्रशमनोपायमपृच्छदपराजितः । संतुष्टः पूजया शंभोर्महागणपतिः स्वयम् ॥ ४ ॥
सर्वविघ्नैकहरणं सर्वकामफलप्रदम् । ततस्तस्मै स्वकं नाम्नां सहस्रमिदमब्रवीत् ॥ ५ ॥

गुरोः प्रसादफलमाह—संतुष्ट इति । उपदेशक्रममाह—सर्वविघ्नेति । अखिलानिष्टबाधकेषूपायेष्वस्य मुख्यत्वकथनाय—एकेति । चतुर्वर्गसाधनत्वकथनाय—सर्वकामेति । ईदृशगुरुपरंपरामूलभूतो गणेश एव शिष्यभक्तिमाहात्म्यात् स्वमुखेनैव स्वकीयं महामन्त्रं एनमुपादिक्षदित्याह—स्वकमब्रवीदिति । ततश्चान्यैरप्ययं मंत्रः प्रोक्तगुरुपरंपराश्चरमेष्वन्यतमं गुरुं भक्त्या संतोष्य तन्मुखादेव लब्ध्वा जपनीयः; न पुस्तकमात्रेण गृहीत्वा जप्तव्य इति तात्पर्यार्थः । अथोपदेशविषयस्यालौकिकत्वात् व्यूढादिवत्स्वयमेव तत्स्वरूपं विध्यपेक्षितत्वात्प्रदर्शयति—गणेश्वर इत्यादिनाऽनन्तानन्तसौख्यद इत्यन्तेन ।

**ॐ गणेश्वरो गणक्रीडो गणनाथो गणाधिपः ॥**
**एकदंष्ट्रो वक्रतुण्डो गजवक्त्रो महोदरः ॥ ६ ॥**

ॐवियदादिप्रपञ्चस्य समूहो गण उच्यते । तदात्मकस्तदीशश्च तेन देवो गणेश्वरः ॥ १ ॥ साक्षाच्छिष्यो गणेशस्य गणक्रीडाभिधो गुरुः । तच्छिष्यो विकटस्तस्य शिष्यो वै विघ्ननायकः ॥ २ ॥ इत्यादयोऽप्यभेदेन गणेशा एव देशिकाः । मंत्रारंभे गुरुं स्मृत्वा वश्यकत्वेन कीर्तिताः ॥ ३ ॥ वियदादिगणस्यान्तः प्रविश्य क्रीडनेन वा । गणक्रीड इति प्रोक्तस्तं[1]त्सृष्ट्वेत्यादिविश्रुतेः ॥ ४ ॥ गणनं गुणसंख्यानामथशब्दात्तु मंगलम् । कृते तयोर्बहुव्रीहौ गणनाथ इति स्मृतः ॥ ५ ॥ आदित्यविश्ववस्वाद्या रुद्रान्ता गणदेवताः । तदाधिपत्यशालित्वान्मम देवो गणाधिपः ॥ ६ ॥ एका मुख्या केवला वा दंष्ट्रा यस्य गणेशितुः । भूम्युद्धारे जगन्नाशे वैकदंष्ट्रः स कीर्त्यते ॥ ७ ॥ शुण्डादण्डस्य वक्रत्वाद् वक्रतुण्ड इतीर्यते । श्रियं तनोति रम्याणां विकारोऽपीति लोकवाक् ॥ ८ ॥ गजस्येव मुखं यस्य गजवक्त्रः स उच्यते । अनंतकोटिब्रह्माण्डपूर्णकुक्षिर्महोदरः ॥ ९ ॥

**लंबोदरो धूम्रवर्णो विकटो विघ्ननायकः ॥**
**सुमुखो दुर्मुखो बुद्धो विघ्नराजो गजाननः ॥ ७ ॥**

ब्रह्माण्डालंबनं यस्य कुक्षिर्लम्बोदरस्तु सः । वायोर्बीजं

---

१ 'तत्सृष्ट्वा तदेवानु प्राविशत्' (तै. २।६) इति श्रुतेरित्याशयः ।

धूम्रवर्णं तद्रूपत्वादसावपि ॥ १० ॥ 'कटे वर्षावरणयो'रिति धातोरनावृतः । विभुत्वाद् विकटः प्रोक्तः स यस्य विगतः कटः ॥ ११ ॥ विघ्नान्नयत्यभक्तौघान् विघ्नानामधिपोऽथ वा । यद्वा विहन्ति नयति प्राणिनो विघ्ननायकः ॥ १२ ॥ आरंभाः शोभना येन यस्य शोभनमाननम् । स एव सुमुखस्तस्मै सुमुखाय नमो नमः ॥ १३ ॥ दुःस्पर्शं वा सुदुर्दर्शमग्नेः सूर्यस्य वा मुखम् । तद्रूपत्वादभक्तेषु तथात्वाच्चैष दुर्मुखः ॥ १४ ॥ नित्यबुद्धस्वरूपत्वात् अविद्यावृत्तिनाशनः । यद्वा जिनावतारत्वाद् बुद्ध इत्यभिधीयते ॥ १५ ॥ विघ्नैर्विराजते तेषां राजा विघ्नस्तु विघ्नकः । भक्ताधीनश्च राजा च विघ्नराजस्ततो मतः ॥ १६ ॥ 'अन प्राणन' इत्यस्माद्धातोर्णिचि ततो ल्युटि । गजाननयतीत्यर्थे साधुरेष गजाननः ॥ १७ ॥ यत्तु—प्राचा गजवक्त्र-गजाननपदयोरवयवार्थाभेदे पौनरुक्त्या सहस्रनामस्तुतिबाध एव, न ह्येकमेव नाम सहस्रवारमावर्तितं स्तुतये पर्याप्तं भवति; किंतु स्मृतिमात्रोपयोग्येव भवति; ततश्च नाम्नां सहस्रेण स्तुतिर्न कृता भवति; अतः सर्वाणि नामानि प्रत्येकं परस्परभिन्नार्थप्रकाशकान्येवेत्युक्तम्,—तत् प्रतिज्ञामात्रम्; नामशब्दस्य प्रातिपदिकवाचकत्वेनार्थैक्येऽपि शब्दभेदमात्रेण नामसहस्रकरणकस्तुतिबाधाभावात् । एतेनैकस्यैव नाम्न आवृत्तौ तदापत्तिर्निरस्ता । किं बहुना, अर्थभेदाच्छब्दभेदं गौणमप्यंगीकृत्याचार्यभगवत्पादैर्विष्णुसहस्रनामस्तुतिनिर्वाहकरणात् शब्दभेदे नामभेदात् कैमुतिकन्यायेनापि तदबाधः । अतो निगमनिरुक्तादिप्रसिद्ध्यनुरोधादक्लिष्टोऽर्थो यथालाभं

वर्ण्यतां नाम। न पुनरर्थभेद एवापेक्षित इति निर्बन्धो युक्तः। एवं प्रौढिमतस्तव गस्थः खान्तान्तस्थ इति नाम्नोरेकार्थत्वेन व्याचक्षाणस्य कथं न लज्जा, कथं वा किरीटी कुंडली हारी वनमालीति नाम्नां त्वदीयपाठरीत्या पुनरुक्तानां अर्जुनशेषमनोहरबलरामपरत्वेन संभवदर्थांतराणामप्येकविधानार्थकत्वेन तावकं वर्णनं युज्यताम्? । यदपि—लंबोदरपदं विराडात्मपरं, विघ्नपदं वायुपरं, गजाननपदं सूर्यपरमित्यादिरीत्या सांप्रतिकलक्षणानेयार्थलक्षणादिभिर्जघन्यवृत्तिभिर्व्याख्यातम्,—तन्मुखे संभवतीत्यादिबहुतरन्यायविरुद्धं क्लिष्टतरं कुसृष्टिरूपं चेति न तादृशार्थज्ञानमदृष्टं जनयितुं अलमिति प्रामाणिकैरुपेक्ष्यमिति दिक्।

**भीमः प्रमोद आमोदः सुरानन्दो मदोत्कटः ॥**
**हेरंबः शंबरः शंभुर्लंबकर्णो महाबलः ॥ ८ ॥**

दुष्टानां भयकारित्वाद् भीम इत्युच्यते बुधैः। इष्टलाभात्सुखं यत्तु स प्रमोद इति स्मृतः ॥१८॥ ततः प्राक् सुखमामोददृष्टार्थप्राप्तिनिश्चयात्। इष्टार्थभोगजनितं सुखमानन्द उच्यते ॥ १९ ॥ स सुरोत्थः सुरथ्यो वा सुरानन्दस्तदात्मना। अत एवान्यविषयमोषादात्मैकभावतः ॥ २० ॥ मदेनावरणोत्क्रांत्या मदोत्कट इति स्मृतः। हः शंकरे रविः शब्दे शैवतंत्रप्रवर्तनात् ॥ २१ ॥ उद्दामशौर्यवत्त्वाद्वा हेरंब इति कथ्यते। शं सुखं तद्वरं श्रेष्ठं यस्मिन्नस्ति स शंबरः ॥ २२ ॥ शंबं वा कुलिशं राति यद्वा सलिलविग्रहः। शंभुस्तु शं भवत्यस्माच्छिवाभेदेन

चोदितः ॥ २३ ॥ यत्र क्वापि कृतं भक्तैराह्वानस्तवनादिकम् । नातिदूर इवाकर्ण्य लंबकर्ण इति स्मृतः ॥ २४ ॥ महान् बलासुरो येन बलित्वाद्वा महाबलः ।

नंदनोऽलंपटोऽभीरुर्मेघनादो गणंजयः ॥
विनायको विरूपाक्षो धीरशूरो वरप्रदः ॥ ९ ॥

नंदिः समृद्धिवाचीति तद्धेतौ ल्युटि नंदनः ॥ २५ ॥ अलंपटसमृद्धत्वादलंकारः पटोऽस्य वा । अभीरुर्भयशून्यत्वादंगनारहितोऽथ वा ॥२६॥ मेघनादः प्रसिद्धार्थो मेघान् नाशयतीति वा । एकैकं यत्नतः शत्रुं जयति प्राकृतो जनः ॥ २७ ॥ अनायासादयं व्यूहान् जयतीति गणंजयः । विः पक्षिरूपो जीवौघस्तन्नेतृत्वाद्विनायकः ॥ २८ ॥ विरूपाक्षो विसदृशैर्नेत्रैरग्निरवींदुभिः । धीरशूरो धैर्यशौर्यसामानाधिकरण्यतः ॥ २९ ॥ वरान् स्वपादसेविभ्यो ददातीति वरप्रदः ।

महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः ॥
रुद्रप्रियो गणाध्यक्ष उमापुत्रोऽघनाशनः ॥१०॥

गुणगुल्मादयः सेनाभेदास्तेषु य उत्तमः ॥३०॥ स्थूलास्तानपि पातीति महागणपतिर्मतः । बुद्धिप्रियः संशयघ्नो बुद्धिः स्यान्निश्चयात्मिका ॥ ३१ ॥ क्षिप्रप्रसादनः क्षिप्रं भक्तैर्ध्यातः प्रसीदति । रुद्रप्रिय इति प्रोक्तो रुद्रैकादशिनीप्रियः ॥ ३२ ॥ गणाध्यक्षस्तु षट्त्रिंशत्तत्त्वसंदोहपालकः । उमापुत्रस्तु पुँल्लोकात्पार्वत्या अपि तारकः ॥३३॥ महोदरोऽप्यसावल्पनैवेद्यैनैव तृप्यति। अशनं न घनं दुःखहरणाद्वा घनाशनः॥३४॥

**कुमारगुरुरीशानपुत्रो मूषकवाहनः ॥**
**सिद्धिप्रियः सिद्धिपतिः सिद्धः सिद्धिविनायकः ११**

सनत्कुमाररूपोऽपि विद्यामुपदिशन् गुरुः । स्कन्दपूर्वभवत्वाद्वा **कुमारगुरुरी**रितः ॥३५॥ **ईशानपुत्र** इत्युक्तः शितिकण्ठात्मजत्वतः । उन्दुरुं वाहनीकृत्य ख्यातो **मूषकवाहनः** ॥३६॥ **सिद्धिप्रियः** प्रिया अस्येत्यणिमाद्यष्टसिद्धयः । अणिमाद्यष्टसिद्धीनां पाता **सिद्धिपति**स्ततः ॥३७॥ गोरक्षादिमहासिद्धरूपत्वात् **सिद्ध** उच्यते । भक्ते सिद्धिर्विशेषेण नयन् **सिद्धिविनायकः** ॥ ३८ ॥ भावप्रधाननिर्देशादवित्वं पशुतां हरन् । विघ्नैर्विरहितत्वाद्वाऽप्य**विघ्न** इति कथ्यते ॥ ३९ ॥

**अविघ्नस्तुंबुरुः सिंहवाहनो मोहिनीप्रियः ॥**
**कटंकटो राजपुत्रः शालकः संमितोऽमितः १२**

रोरूयमाणस्तुंबेन वैणिकैरिति **तुंबुरुः** । इमे गायंति वीणायां एतमेवेति[1] हि श्रुतिः ॥ ४० ॥ मयूरमूषकौ यद्वत्तथा सिंहोऽपि वाहनम् । गौर्या वा सिंहवाहाया अभेदात्**सिंहवाहनः** ॥४१॥ मोहिनीशः शिवस्तस्मादभिन्नो **मोहिनीप्रियः** । कटमावृत्तिमज्ञानं नीहारेणेति[2] हि श्रुतेः ॥ ४२ ॥ कटयत्यावृणोतीति ज्ञानदानात्**कटंकटः** । वरेण्याख्यस्य पृथिवीनेतुः पुत्रवदाचरन्

---

टिप्प०—१ 'एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृ. ४।४।२२ ) इति श्रुतिः । २ 'नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकाशनानाम् । एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥' ( श्वेता० २।११ ) इति श्रुतिः ।

॥ ४३ ॥ चंद्रो वा पुत्रवद्यस्य राजपुत्रः स उच्यते ॥ शः परोक्षेऽलकः केशे यस्यैकांशोऽप्यचाक्षुषः ॥ ४४ ॥ शातींद्रियः शालतेऽसौ राजतेवेति शालकः । अंगुष्ठमात्रमित्यादि[1] श्रुत्या व्याप्तोऽपि संमितः ॥ ४५ ॥ मशकेनापि नागेन शम इत्यपि च श्रुतेः । परिमाणं त्वणु स्थूलं ह्रस्वं दीर्घं चतुर्विधम् ॥४६॥ तन्नास्तीत्यमितोऽस्थूलमनण्वित्यादितः[2] श्रुतेः ।

**कूष्माण्डसामसंभूतिर्दुर्जयो धूर्जयो जयः ॥**
**भूपतिर्भुवनेशानो भूतानांपतिरव्ययः ॥ १३ ॥**

कूष्माण्डसामसंभूतिः कूष्माण्डैर्जुहुयादिति ॥ ४७ ॥ विधौ प्रसिद्धा मंत्राश्च सामान्यस्य विभूतयः । अजय्यो बलिभिर्दैत्यैर्मनसापीति दुर्जयः ॥४८॥ धुरं वहत्यनायासाज्जगतामिति धूर्जयः । जयो जयस्वरूपत्वाद्भारताद्यात्मकत्वतः ॥ ४९ ॥ भूपतिर्भुवनपतिर्भूतानांपतिरित्यमी । भ्रातरोऽग्नेस्तदात्मत्वाद्भूपत्यादिः प्रकीर्तितः ॥ ५० ॥ अव्ययो नाशराहित्याद्

**विश्वकर्ता विश्वमुखो विश्वरूपो निधिर्घृणिः ॥**
**कविः कवीनामृषभो ब्रह्मण्यो ब्रह्मणस्पतिः १४**

विश्वकर्ता जगत्कृतेः । विश्वस्य मुखमारंभो यस्माद्विश्वं मुखेऽस्य वा ॥५१॥ विश्वस्य मुखवत्तृप्तिहेतुर्विश्वमुखस्ततः । सर्वप्रपंचरूपत्वाद् विश्वरूप इति स्मृतिः ॥ ५२ ॥ अथवा

---

टिप्प०—१ 'अङ्गुष्ठमात्रमात्मानं सधूमज्योतिरूपकम् । प्रकाशयन्तमात्मानं ध्यायेत्कूटस्थमव्ययम् ॥' (पैङ्ग० ३।५) इति श्रुतिः । २ 'स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्' (बृ. ३।३।८) इति श्रुतिः ।

विश्वरूपोऽसौ त्वष्टा दैवपुरोहितः। वियदादिजगज्जातं नितरां यत्र धीयते ॥ ५३ ॥ महापद्मादिनवकरूपत्वाद्वा निधिः स्मृतः। घृणिरादित्यरूपत्वाद् घृणिः सूर्य इति श्रुतेः ॥५४॥ कार्यत्वात्काव्यकर्तृत्वात् कविरेष तथा कविं–। कवीनामुपमश्रुत्या कवीनामृषभोऽप्ययम् ॥ ५५ ॥ ब्रह्मण्यो ब्राह्मणे वेदे साधुस्तपसि धातरि। वाग्वै ब्रह्मपतिस्तस्या इत्येष ब्रह्मणस्पतिः ॥ ५६ ॥

**ज्येष्ठराजो निधिपतिर्निधिप्रियपतिप्रियः ॥**
**हिरण्मयपुरांतःस्थः सूर्यमण्डलमध्यगः ॥१५॥**

ज्येष्ठराज इति ख्यातो ज्येष्ठाख्ये साम्नि राजनात्। एष नाम्ना निधिपतिर्निधीनां परिपालनात् ॥५७॥ निधीनां त्वा निधिपतिं हवामह इति श्रुतेः। निधिप्रिया ये पतयो राजराजादयो नृपाः ॥ ५८ ॥

तैरप्युपास्य इत्येष निधिप्रियपतिप्रियः। हिरण्मयपुरान्तःस्थो दहराकाशमध्यगः ॥ ५९ ॥ चिन्मयब्रह्मपूर्देहस्तदंतर्हृदये स्थितेः। ध्येयत्वादंतरादित्ये सूर्यमंडलमध्यगः ॥ ६० ॥

**कराहतिध्वस्तसिंधुसलिलः पूषदन्तभित् ॥**
**उमाङ्ककेलिकुतुकी मुक्तिदः कुलपालनः ॥ १६ ॥**

---

टिप्प०–१ 'घृणिः सूर्य आदित्य ॐनमो नारायणाय' (ना. उ. २।३) इति। २ 'कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्राह्मणां' 'गणानां त्वा गणनाथं सुरेन्द्रं कविं कवीनाम्' (गणेशपू. उ. १।५) इति श्रुतिः।

शुण्डादण्डाभिघातेन रिक्तमब्धिं चकार यः ॥ करावृति-ध्वस्तासिंधुसलिलः स ततो मतः ॥ ६१ ॥ वीरभद्रो दक्ष-मुखे पूष्णो दंतानपातयत् । तद्रूपत्वादसौ देवः कथ्यते पूषदंतभित् ॥ ६२ ॥ गौर्युत्संगे कृताक्रीडो न बाल्यात्किंतु कौतुकात् । अत एवोमाङ्ककेलिकुतुकी विबुधैः स्मृतः ॥६३॥ निगडो मोचनान्मोक्षदानाद्वा मुक्तिदो मतः । वंशस्य कौल-तंत्रस्याप्यवनात् कुलपालनः ॥ ६४ ॥

**किरीटी कुण्डली हारी वनमाली मनोमयः ॥**
**वैमुख्यहतदैत्यश्रीः पादाहतिजितक्षितिः १७**

( यदाभिमुख्यराहित्यान्नष्टा संपत्सुरद्विषाम् ) । किरीटी मौलिभूषावानथवाऽर्जुनरूपधृक् । कुंडली कर्णभूषावान् अथवा शेषरूपधृक् ॥ ६५ ॥ हारी मुक्तादिमालाधृगथवाऽ-त्यंतसुंदरः । वनमाली दधात्येष मालामापादलंबिनीम् ॥६६॥ मनोमयः स्वसंकल्पकल्पितैककलेवरः । यदाभिमुख्यराहि-त्यान्नष्टा संपत्सुरद्विषाम् ॥ ६७ ॥ यत्पादाघातमात्रेण पृथ्वी नम्रा बभूव सः । वैमुख्यहतदैत्यश्रीः पादाहतिजित-क्षितिः ॥ ६८ ॥

**सद्योजातस्वर्णमुञ्जमेखली दुर्निमित्तहृत् ॥**
**दुःस्वप्नहृत् प्रसहनो गुणी नादप्रतिष्ठितः ॥१८॥**

मुञ्जाख्यहैमतृणजां मौञ्जीं तात्कालिकीं दधत् । सद्यो-जातस्वर्णमुञ्जमेखलीति निगद्यते ॥ ६९ ॥ मूर्तिस्फोटन-भूकम्पमहोल्कापतनादिभिः । संसूचितान्यरिष्टानि हन्त्यतो

दुर्निमित्तहृत् ॥ ७० ॥ दुःस्वप्नमपि सुस्वप्नं कुर्वन् दुःस्वप्न-हृन्मतः । भक्तापराधान् क्षमते तेन प्रसहनः स्मृतः ॥ ७१ ॥ विशोकविजिघत्सत्वप्रमुख्यैः स्यात् गुणैर्गुणी । अस्ति प्रणव-बिन्द्वन्तेऽर्धचन्द्राद्यक्षराष्टकम् ॥ ७२ ॥ तत्र नादस्तृतीयस्त-द्वाच्यो नादप्रतिष्ठितः ।

**सुरूपः सर्वनेत्राधिवासो वीरासनाश्रयः ॥**
**पीतांबरः खण्डरदः खण्डेन्दुकृतशेखरः ॥१९॥**

सुरूपो भूरिलावण्याद्यद्वा तत्त्वनिरूपणात् ॥ ७३ ॥ इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ । गणेशसहस्रनामखद्योते प्रथमं शतम् ॥

सर्वनेत्रेषु वसति य एष क्षीणपूरुषः । एष[1] आत्मेति वचनात् सर्वनेत्राधिवासकः ॥ ७४ ॥ वामजानूपरिगतदक्षपादोपवे-शनं । वीरासनं तथा स्थानादेष वीरासनाश्रयः ॥ ७५ ॥ निपीतं गगनं येन यस्य पीतोऽथ वा पटः । स तु पीतांबरः खण्डरदो दन्तार्धधारणात् ॥ ७६ ॥ अर्धचन्द्रं दधन्मूर्ध्ना खण्डेन्दुकृतशेखरः ।

**चित्रांकश्यामदशनो भालचन्द्रश्चतुर्भुजः ॥**
**योगाधिपस्तारकस्थः पुरुषो गजकर्णकः ॥२०॥**

श्यामैकप्रचुरैश्चित्रैरंकिते रदने सति ॥ ७७ ॥ चित्रां-कश्यामदशन इत्येवं स्तूयसे बुधैः । भालचन्द्र इति ख्यातो भाले चंद्रस्य धारणात् ॥ ७८ ॥ अष्टमीचंद्रसदृशं ललाटं

---

टिप्प०—१ 'एष आत्माऽपहतपाप्मा विजरो विमृत्युः' (छां० ८।१।५) इति श्रुतिः ।

यस्य सोऽथवा । चत्वारो बाहवो यस्य विग्रहे स चतुर्भुजः ॥ ७९ ॥ योगाचार्यावतारा ये लैंगेऽष्टाविंशतिः स्मृताः । लकुलीशादयस्तत्तद्रूपो योगाधिपो मतः ॥ ८० ॥ प्रणवेनाभिधेयत्वात् तारकस्थ इति स्मृतः । पूर्षु सर्वासु शेतेऽसौ साक्षित्वेनेति पूरुषः ॥ ८१ ॥ यस्य कर्णौ गजस्येव तेनासौ गजकर्णकः ।

गणाधिराजो विजयस्थिरो गजपतिध्वजी ॥
देवदेवः स्मरप्राणदीपको वायुकीलकः ॥ २१ ॥

आधीयंते यत्र काव्ये गणा मयरसादयः[1] ॥ ८२ ॥ गणाधिराजस्तेनासौ राजते प्रतिपाद्यते । भक्तानां विजये स्थैर्ये शालित्वाद् विजयस्थिरः ॥ ८३ ॥ गजेंद्राढ्यो[2] ध्वजोऽस्येति मतो गजपतिध्वजी । देवदेवो वासवादिदैवतैरप्युपास्यते ॥ ८४ ॥ रुद्रेण दग्धदेहोऽपि प्राणानुज्जीवयन्नयम् । मन्मथस्य स्मरप्राणदीपकत्वेन कीर्त्यते[3] ॥ ८५ ॥ नवद्वारि तनौ प्राणान् स्तंभयन् वायुकीलकः ।

विपश्चिद्वरदो नादोन्नादभिन्नबलाहकः ॥
वराहरदनो मृत्युंजयो व्याघ्राजिनांबरः ॥२२॥

राज्ञे विपश्चिदाख्याय चतुर्वा[4] त्रीन् वरं ददत् ॥८६॥ अद्वयात्मना त्वं वासिष्ठो विपश्चिद्वरदः स्मृतः । अल्पनादैर्महानादैरपि येन विदारिताः ॥ ८७ ॥ मेघाः स कथ्यते नादोन्नादभिन्नबलाहकः । वराहदंष्ट्राशोभाजिदेकदंतविराजितः ॥८८॥

---

पाठा०–1 मदरसादयः. 2 गजेन्द्राद्यो. 3 कथ्यते. 4 चतुर्गोत्रीं.

इति भाष्यपुराणोक्तेर्वराहरदनो मतः। कालमृत्युं प्रमादं वा हरन् मृत्युंजयो मतः ॥ ८९ ॥ प्रमादं वा मृत्युमहं ब्रवीमीति तु भारतात्। वस्ते शार्दूलचर्मेति स्मृतो व्याघ्राजिनांबरः ॥ ९० ॥

**इच्छाशक्तिधरो देवत्राता दैत्यविमर्दनः ॥**
**शंभुवक्त्रोद्भवः शंभुकोपहा शंभुहास्यभूः ॥२३॥**

जगत्सिसृक्षाधारित्वात् इच्छाशक्तिधरो मतः। देवत्राताऽखिलान्देवांस्त्रायते दैत्यजाद्भयात् ॥ ९१ ॥ अत एव हरन् देवरिपून् दैत्यविमर्दनः। शंभुवक्त्रोद्भवो योऽयमवतीर्णः शिवाननात् ॥ ९२ ॥ पितुः क्रोधं हरन् बाललीलाभिः शंभुकोपहा। अज्ञवत् कतिचित् क्रीडाः कुर्वाणः शंभुहास्यभूः ॥ ९३ ॥

**शंभुतेजाः शिवाशोकहारी गौरीसुखावहः ॥**
**उमाङ्गमलजो गौरीतेजोभूः स्वर्धुनीभवः ॥ २४ ॥**

शंभुतेजा इति प्रोक्तः शिवतेजोऽस्ति यस्य सः। महिषादिहर्तौ भग्नोत्साहायावर्धयन् बलम् ॥ ९४ ॥ दाक्षायण्याः शिवाशोकहारीति परिगीयते। हर्षं गौर्यास्तपस्यंत्याः कुर्वन् गौरीसुखावहः ॥ ९५ ॥ निजांगोद्वर्तनोत्थेन मलेन प्रतिमामुमा। चक्रे तदंतः प्रविशन् उमाङ्गमलजो मतः ॥ ९६ ॥ चंडिकाभूयमात्मानं विष्णुब्रह्मादितेजसाम्। आधारत्वादसौ

---

पाठा०-1 भास्वपुराणोक्तेः. 2 अन्यवत्. 3 चण्डिकाभूपमात्मानां.

गौरीतेजोभूरिति कथ्यते ॥ ९७ ॥ स्कन्दो गंगोद्भवस्तस्माद-भेदात् स्वर्धुनीभवः । स्वर्धुन्या उद्भवो यस्मादिति वा स्वर्धुनीभवः ॥ ९८ ॥

**यज्ञकायो महानादो गिरिवर्ष्मा शुभाननः ॥**
**सर्वात्मा सर्वदेवात्मा ब्रह्ममूर्धा ककुप्श्रुतिः ॥२५॥**

यज्ञकायोऽश्वमेधादिमखजातस्वरूपवान्[1] । उच्चैस्तरां वषट्कारोऽस्तुश्रौषड्ययेयजामहे ॥ ९९ ॥ आश्रावयेत्यादिरूपो[2] महानाद इति स्मृतः । गिरिवर्ष्माद्रयो यस्य विराजो देहतां गताः ॥ १०० ॥ मंगलनामानं[3] प्राणं जनयन् स शुभाननः । सर्वात्माऽप्येष सर्वं[1] खल्विदं ब्रह्मेति तु श्रुतेः ॥ १०१ ॥ देहभूता यस्य सर्वदेवात्माखिलदेवताः । ब्रह्मैव यस्य मूर्धा स ब्रह्ममूर्धेति कथ्यते ॥ १०२ ॥ कर्णभूता दिशो यस्य कथितः स ककुप्श्रुतिः ।

**ब्रह्मांडकुंभश्चिद्व्योमभालः सत्यशिरोरुहः ॥**
**जगज्जन्मलयोन्मेषनिमेषोऽग्न्यर्कसोमदृक् ॥२६॥**

ब्रह्मांडखर्परयुतं[4] न्युब्जं सद्यस्य कुम्भति ॥१०३॥ विश्वात्मनः स ब्रह्माण्डकुम्भ इत्यभिधीयते । ब्रह्माण्डखर्परांतर्यल्लग्नं खं तच्चिदंबरं ॥१०४॥ तदस्य ब्रह्मरंध्रं चिद्व्योमभालः स उच्यते । सत्यलोको यस्य कैश्यमसौ सत्यशिरोरुहः ॥१०५॥ उन्मेषाज्जा-

पाठा०–1 मखराज. 2 ओंश्रावये. 3 मंगलानामनं. 4 युगं.

टिप्प०–१ 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां. ३।१४।१) इति श्रुतिः ।

यते यस्य निमेषाल्लीयते जगत् । जगज्जन्मलयोन्मेषनिमेष इति स स्मृतः ॥ १०६ ॥ ऊर्ध्वदक्षिणवामानि नेत्राणि जगदात्मनः । वह्निसूर्येंदवो यस्य क्रमात्सोऽग्न्यर्कसोमदृक् ॥१०७॥

गिरींद्रैकरदो धर्माधर्मोष्ठः सामबृंहितः ॥
ग्रहर्क्षदशनो वाणीजिह्वो वासवनासिकः ॥२७॥

एकस्थूलो बहिर्दंतो गिरींद्रः कनकाचलः । विराड्रूपजुषो यस्य गिरींद्रैकरदो हि सः ॥ १०८ ॥ यत्तु–प्राचा गिरींद्रपदं हिमवत्परत्वेन व्याख्यातं,–तत्सुमेरुकूटदंतायेति गणेशस्तवराजविरुद्धत्वादनादेयम् । मेरुपृष्ठ इति नाम्ना पौनरुक्त्यं तु 'अग्न्यर्कसोमदृक्' 'सोमार्कघंट' इतिवन्न दोषावहम् । पापपुण्ये यदोष्ठौ स धर्माधर्मोष्ठ उच्यते । धर्मोत्तरोष्ठो दुरिताधरोष्ठ इति च स्मृतेः ॥ १०९ ॥ यद्बृंहितं सामवेदः स प्रोक्तः सामबृंहितः । स्तोत्रात्मकैः सामभिस्तोषित इति प्राचामर्थो विराट्पुरुषरूपवर्णनप्रकरणाननुगुणत्वाद्रूपकसमासप्रायपाठस्वारस्यविरोधात् गजगर्जितवाचकबृंहितपदशक्यार्थत्यागाच्च नोपादेयः । सूर्योदयो ग्रहा यस्य कृत्तिकाद्याश्च तारकाः ॥ ११० ॥ मुखांतःस्थाः सूक्ष्मदंतो ग्रहर्क्षदशनो हि सः ॥ पुराणन्यायमीमांसाथर्वर्ग्यजुषादिकाः ॥ १११ ॥ वाक्तती रसना यस्य स वाणीजिह्व उच्यते ॥ नासा यस्य शुनासीरः सोऽयं वासवनासिकः ॥ ११२ ॥

---

पाठा०–1 विराटपुरुषानुगुण.

कुलाचलांसः सोमार्कघंटो रुद्रशिरोधरः ॥
नदीनदभुजः सर्पाङ्गुलीकस्तारकानखः ॥ २८ ॥

कुलाचलांसो विंध्याद्या यस्य स्कंधतया मताः । कंधरोर्ध्वं मांसपिण्डावुन्नतौ घंटिके मते ॥ ११३ ॥ ते रवींदू यस्य सोमार्कघंटः कथितो हि सः । गजघंटायुगुलं[1] शब्दायमानमिति केचित् ॥ यस्य ग्रीवा रुद्र एव स वै रुद्रशिरोधरः ॥ ११४ ॥ गंगाशोणादयो नद्यो नदा यस्य भुजाः स तु ॥ नदीनदभुजः सिंधुनदी नंदति वा भुजः ॥ ११५ ॥ अत्र प्रथमपक्षे 'पुमान् स्त्रिया' (पा. १।२।६७) इत्येकशेषाभावश्छांदसः । सर्पांगुलीकः शेषाद्या अंगुल्यो यस्य पन्नगाः । ध्रुवाद्या यन्नखास्ताराः स स्मृतस्तारकानखः ॥ ११६ ॥

भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोत्कटः ॥
व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः ॥२९॥

भ्रूमध्यसंस्थितकरो भ्रुवोर्घ्राणस्य संधिगम् । यत्तत्त्वं श्रुतिषूक्तं तच्छुंडादंडात्म यस्य सः ॥ ११७ ॥ प्रपंचमानापह्नुत्या ब्रह्मविद्यैव वै मद । तेनोद्भिन्नौ कटौ यस्य ब्रह्मविद्यामदोत्कटः ॥ ११८ ॥ यत्तु-प्राचा भ्रूमध्यविमुक्तं तत्रावस्थानं करोति तत्रैवोपलब्धव्य इति यावत्; 'ब्रह्मज्ञानानंदो मदस्तेनोद्गतं कटमावरणं यस्येति नामद्वयं व्याख्यातं'-तद्विश्वरूपप्रकरणविरोधादनादेयम् । यस्य व्योमबिलं नाभिर्व्योम-

---

पाठा०-1 शोभायमानं.

नाभिरसौ मतः । ऋचः सामानि यजूंषि सा हि श्रीरमृता सतां ॥ ११९ ॥ त्रैय्यर्थ एव यच्चित्तं स श्रीहृदय उच्यते । सुमेरुरेव यत्पृष्ठं मेरुपृष्ठः स उच्यते[1] ॥ १२० ॥ जठरांतर्जलस्थानेऽर्णवा इत्यर्णवोदरः ।

**कुक्षिस्थयक्षगंधर्वरक्षःकिन्नरमानुषः ॥**
**पृथ्वीकटिः सृष्टिलिंगः शैलोरुर्दस्रजानुकः ॥ ३० ॥**

अंत्राद्यवयवाः कुक्षौ यस्य यक्षादयः स तु ॥ १२१ ॥ कुक्षिस्थयक्षगंधर्वरक्षःकिन्नरमानुषः । पृथिव्येव कटिस्थानं यस्य पृथ्वीकटिस्तु सः ॥ १२२ ॥ सृष्टिलिंगस्तु यच्छेपःस्थाने मैथुनजाः प्रजाः । शैलोरुः पर्वता एव यस्योरुस्थानतां गताः ॥ १२३ ॥ दस्रौ यस्याश्विनौ जानू स मतो दस्रजानुकः ।

**पातालजंघो मुनिपात् कालांगुष्ठस्त्रयीतनुः ॥**
**ज्योतिर्मण्डललाङ्गूलो हृदयालाननिश्चलः ॥ ३१ ॥**

पातालजंघो यज्जंघात्मकं पातालसप्तकं ॥ १२४ ॥ मुनिपात् मुनिभिः पादलग्नैः पादात्मतां गतैः । कालांगुष्ठो महामृत्युर्यत्पादांगुलितां गतः ॥ १२५ ॥ अयुक्तावयवा[2] यस्य श्रुतयः स त्रयीतनुः । शिंशुमाराभिधं ज्योतिश्चक्रं पुच्छं हि यस्य सः ॥ १२६ ॥ ज्योतिर्मण्डललाङ्गूलो ब्रह्मात्रोक्तं[3] गजाकृति । भक्तानां हृदयान्येवास्यालानं[4] गजबंधनम् ॥ १२७ ॥ तत्रापगतचाश्चल्यो हृदयालाननिश्चलः ।

---

पाठा०–1 कथ्यते. 2 अनुक्तावयवा. 3 ब्रह्मात्रोक्तं गजाकृतिः. 4 हृदयाब्जे.

**हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः ॥**
**सद्भक्तध्याननिगडः पूजावारीनिवारितः ॥३२॥**

हृदंतर्दहराकाशं यस्य क्रीडासरः स तु ॥ १२८ ॥ हृत्पद्मकर्णिकाशालिवियत्केलिसरोवरः । सर्वगोऽपि परिच्छिन्नो भक्तैर्ध्यानेन यः स तु ॥ १२९ ॥ सद्भक्तध्याननिगडः शृङ्खला ह्यवरोधिका । पूर्जैव कथिता वारी गजबंधनशृङ्खला ॥ १३० ॥ संनिरुद्धस्तया देवः पूजावारीनिवारितः । यत्तु-प्राचा वारीपदं ह्रस्वांतं पठता पूजां वारयंतीति पूजावारिणो राक्षसाः, तैरयं दूरीकृतोऽसेवित इति व्याख्यातं,- तादृशार्थेन कीदृशी देवतास्तुतिः संपद्यत इति चिंत्यम्। ह्रस्वांत एव पाठ इति यदि शपथे प्रवर्तसे तदापि वारिपदं हि परिखाजलपरत्वेन व्याख्याय तदवगुंठितः पूजकैर्[1]दुरधिगम इति व्याख्येयम्; पूजारंभे देवतायाः संनिरोधनावगुंठनविषयकप्रार्थनादेर्विधानात् ।

**प्रतापी कश्यपसुतो गणपो विष्टपी बली ॥**
**यशस्वी धार्मिकः स्वोजाः प्रथमः प्रथमेश्वरः ३३**

प्रतापी तापकत्वेन पराक्रमयुतोऽथवा ॥ १३१ ॥ कश्यपस्य मुनेः कुक्षाववतीर्ण इति स्मृतः । कथापुराणे गाणेशे स कश्यपसुतो मतः ॥१३२॥ गणपोऽध्वर्युहोत्रादीन् पातीति चतुरो गणान् । विष्टपी भुवनाधारो बलसामान्यवान् बली ॥ १३३ ॥ यशस्वी पुण्यकीर्त्याढ्यो धार्मिको धर्मवर्धकः ।

---

पाठा०-1 अपूजकैः.

अष्टमो धातुरोजः स्यात् स्वोजास्तद्यस्य शोभनं ॥ १३४ ॥
प्रथमः सर्वकार्यादौ पूज्यत्वात्सर्वदेहिनाम् । प्रथमा ब्रह्मविष्णवीशास्तदीशः प्रथमेश्वरः ॥ १३५ ॥

चिंतामणिद्वीपपतिः कल्पद्रुमवनालयः ॥
रत्नमंडपमध्यस्थो रत्नसिंहासनाश्रयः ॥ ३४ ॥

चिंतामणिद्वीपपूर्वं रत्नसिंहासनावधि । यस्योपभोग्यं संप्रोक्तश्चतुर्भिरिह नामभिः ॥ १३६ ॥

तीव्राशिरोधृतपदो ज्वालिनीमौलिलालितः ॥
नंदानंदितपीठश्रीर्भोगदाभूषितासनः ॥ ३५ ॥
सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः ॥
तेजोवतीशिरोरत्नं सत्यानित्यावतंसितः ॥ ३६ ॥

तीव्रा च ज्वालिनी नंदा भोगदा कामदायिनी । उग्रा तेजोवती सत्या नवमी विघ्ननाशिनी ॥ १३७ ॥ पत्राष्टके कर्णिकायां [1]संत्येताः पीठशक्तयः । नवैताः पद्मसहिताः कथिता दशनामभिः ॥ १३८ ॥ तत्र स्फुरदुग्रासनाश्रय इत्यस्यान्ते शतकपूर्तिः ॥ १३९ ॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ॥
गणेशनामखद्योते द्वितीयमभवच्छतम् ॥ २०० ॥

---

पाठा०–1 सत्यान्ताः.

सविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजाश्रयः ॥
लिपिपद्मासनाधारो वह्निधामत्रयाश्रयः ॥३७॥

सर्वशक्त्यंबुजाश्रय इति ॥ अत्र पूर्वोक्तनवकपरं सर्वपदमज्ञात्वा यत्प्राचोक्तं सर्वशक्तिर्नाम काचिदन्वर्थनामा दशमी शक्तिरेतादृशशक्तयो दशदिक्स्था इति,–तदिदं मंत्रशास्त्रज्ञानाभावप्रयुक्तप्रलपनमित्युपेक्ष्यं । द्विद्विस्वरककिंजल्कं पद्मप्रासादकर्णिकं । कादिवर्गाष्टकदलं मातृकापद्ममुच्यते ॥१४०॥ तत्रस्थो लिपिपद्मासनाधार इति कथ्यते । कर्णिकोपर्युपर्यर्केंद्वग्न्याख्यं तेजसां त्रयं ॥ १४१ ॥ आस्तीर्णं तत्र निवसन् वह्निधामत्रयाश्रयः। यत्तु–प्राचा मातृकाचक्रोपरि पद्मासनं वह्निसूर्यसोममया अंतरंतस्त्रयः प्राकारास्तदंतर्गणेशस्य गृहमिति नामद्वयं व्याख्यातं,–तदसांप्रदायिकत्वादुपेक्ष्यम् । पादाग्रे उन्नते यस्य सोन्नतप्रपदो मतः ॥ १४२ ॥

उन्नतप्रपदो गूढगुल्फः संवृत्तपार्ष्णिकः[1] ॥
पीनजङ्घः श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ३८

कूर्मपृष्ठसमाकारभाव औन्नत्यमीरितम् । पादमूलगतावस्थिग्रंथी आच्छादितौ यदि ॥ १४३ ॥ नोन्नतत्वेन दृश्येते गूढगुल्फस्तदोच्यते । गुल्फाधोभागयोर्मांसपूर्त्या संवृत्तपार्ष्णिकः[1] ॥१४४॥ पिंडिके मांसले यस्य पीनजङ्घः स कथ्यते । जंघोरुसंधियुग्मं चेदस्पष्टं श्लिष्टजानुकः ॥१४५॥ स्थूलोरु-

पाठा०–1 संव्रृत.

रूरुयुगुलं यस्य स स्मृतः । आनम्रोन्नमत्कटिर्यस्य स प्रोक्तः प्रोन्नमत्कटिः ॥ १४६ ॥

निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः ॥
पीनस्कन्धः कम्बुकण्ठो लंबोष्ठो लंबनासिकः ३९

गांभीर्यतो निम्ननाभिः स्थूलकुक्षिः पिचंडिलः । व्यूढोरस्कः पीनवक्षा आजानुत्वाद्बृहद्भुजः ॥ १४७ ॥ पीनस्कंधो मांसलांसः कम्बुकण्ठोऽब्जकंधरः । वलित्रितयसंयुक्तः कण्ठो यस्य स कीर्तितः ॥१४८॥ लंबमानाधरोष्ठत्वाल्लंबोष्ठः स्याद्गजाननः । शुण्डादण्डो लंबमानो यस्यासौ लम्बनासिकः ॥१४९॥

भग्नवामरदस्तुंगः सव्यदंतो महाहनुः ॥
ह्रस्वनेत्रत्रयः शूर्पकर्णो निबिडमस्तकः ॥४०॥

भग्नवामरदो यस्य छिन्नाग्रो बामदन्तकः । दन्तोऽस्य दक्षिणस्तुंगः सव्यदन्तो यदुन्नतः ॥ १५० ॥ कपोलपरभागस्य महत्त्वेन महाहनुः । गजस्य यादृशं वक्रं तद्योग्यपरिमाणकम् ॥१५१॥ न लोचनमनेनासौ ह्रस्वनेत्रत्रयः स्मृतः । यस्य शूर्पाकृती कर्णौ शूर्पकर्णः स उच्यते ॥ १५२ ॥ घनत्वादतिकाठिन्यान्मूर्ध्नो निबिडमस्तकः ।

स्तबकाकारकुंभाग्रो रत्नमौलिर्निरंकुशः ॥
सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ॥ ४१ ॥

स्तबकाकारकुंभाग्रो गुच्छोपमशिरोज्ज्वलः ॥ १५३ ॥ रत्नोत्कीर्णकिरीटाढ्यो रत्नमौलिरुदीरितः । कुंभयोरंकुशा-

स्पर्शात्स्वातंत्र्याद्वा निरंकुशः ॥ १५४ ॥ [1] सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ।

सर्पकोटीरकटकः सर्पग्रैवेयकांगदः ॥
सर्पकक्ष्योदराबंधः सर्पराजोत्तरीयकः ॥ ४२ ॥

सर्पकोटीरकटकः सर्पौ यन्मौलिकंकणे ॥ १५५ ॥ सर्पात्मकण्ठदोर्भूषः सर्पग्रैवेयकांगदः । लक्ष्या च कटिबंधाख्या कक्ष्याबंधश्च पन्नगौ ॥१५६॥ यस्यासाते सर्पकक्ष्योदराबन्धः स कीर्तितः । 'उदराबंध' इति दैर्घ्यमार्षमिति प्राञ्चः । सोत्तरीयो वासुकिना सर्पराजोत्तरीयकः ॥ १५७ ॥

रक्तो रक्तांबरधरो रक्तमाल्यविभूषणः ॥
रक्तेक्षणो रक्तकरो रक्तताल्वोष्ठपल्लवः ॥ ४३ ॥

रक्तः कान्त्या वस्त्रमाल्यभूषादृक्करतालुना । ओष्ठाग्रस्य च शोणत्वान्नामभिः पंचभिः स्तुतः ॥ १५८ ॥

श्वेतः श्वेतांबरधरः श्वेतमाल्यविभूषणः ॥
श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ॥ ४४ ॥

विद्याकामादिभिर्ध्येयं रूपं बोधयितुं पुनः । प्रवृत्तं श्वेत इत्यादि स्पष्टार्थं नामपंचकम् ॥ १५९ ॥

सर्वावयवसंपूर्णसर्वलक्षणलक्षितः ॥
सर्वाभरणशोभाढ्यः सर्वशोभासमन्वितः ॥ ४५ ॥

---

पाठा०–1 सर्पहारकटीसूत्रयज्ञसूत्रं च यस्य सः.

सर्वांगेषु समुद्रोक्तलक्षणैः पूरणादयम् । सर्वावयवसंपूर्ण-सर्वलक्षणलक्षितः ॥ १६० ॥ सर्वाभरणशोभाढ्योऽ-लंकारालंकृतत्वतः । लावण्याख्याङ्गकान्त्याढ्यः सर्वशोभा-समन्वितः ॥ १६१ ॥

**सर्वमंगलमांगल्यः सर्वकारणकारणम् ॥**
**सर्वदैककरः शार्ङ्गी बीजापूरी गदाधरः ॥ ४६ ॥**

सर्वमंगलमांगल्यः शुभानां च शुभावहः । सर्वमंगला-ख्याया देव्या मंगलावह इति प्राञ्चः,–तत्पक्षे आबन्तस्य पुंव-द्भावः केनेति विचार्यम् । सर्वस्य जगतो व्यक्तं परमाण्वादि-कारणम् ॥ १६२ ॥ तेषामपि च हेतुत्वात् सर्वकारणकार-णम् । सर्वदैककरः सर्वं धत्ते मुख्यः करोऽस्य यत् ॥१६३॥ शृंगोद्भवं धनुः शार्ङ्गं तद्वान् शार्ङ्ग्यथ नामभिः । दशभिर्दश-हस्तस्यायुधान्यत्र गणेशितुः ॥ १६४ ॥

**इक्षुचापधरः शूली चक्रपाणिः सरोजभृत् ॥**
**पाशी धृतोत्पलः शालीमंजरीभृत् स्वदंतभृत् ४७**

मातुलिंगं गदेक्षूत्थं धनुः शूलं सुदर्शनं । ([1]शंख) पद्मपाशो-त्पलव्रीहिकणिशानि रदार्धकम् ॥ १६५ ॥ यत्तु–प्राचा बीजा-पूरपदं दाडिमपरत्वेन व्याख्याय, इक्षुचापधरादि नामपंचकं मदनरुद्रविष्णुब्रह्मपरत्वेन व्याख्याय तदुत्तरनामद्वयं वर्षासु जलस्थलशोभाकरत्वाद्वरुणपरमेव व्याख्यातं,–तद्दशभुजाया

पाठा०–1 शङ्खपाशोत्पलव्रीहि.

गणेशमूर्तेः 'बीजापूरगदेक्षुकार्मुकरुचा चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्करांभोरुहः' इति ध्यानश्लोकस्थपदानां परशुरामकल्पसूत्रोक्तसांप्रदायिकार्थस्य स्वप्नेऽप्यश्रवणादेवेत्युपेक्ष्यं ॥

कल्पवल्लीधरो विश्वाभयदैककरो वशी ॥
अक्षमालाधरो ज्ञानमुद्रावान् मुद्गरायुधः ॥४८॥

अथ मंत्रांतरंगानां ध्याननामायुधान्यपि । सांकर्येण विनिर्देष्टुं नामान्यत्र त्रयोदश ॥ १६६ ॥ कल्पवल्लीधरः कल्पलतां धत्ते करांबुजे । विश्वस्मादभयं धत्ते यस्य मुख्यः करः स तु ॥ १६७ ॥ महागणपतिर्विश्वाभयदैककरः स्मृतः । वशेऽस्य विश्वं सर्वस्य[1] वशीति श्रुतितो वशी ॥ १६८ ॥ अकारादिक्षकारांतमातृकात्मकमालिका । उक्ताक्षमाला तद्धारी त्वक्षमालाधरो मतः ॥ १६९ ॥ तर्जन्यंगुष्ठसंयोगो ज्ञानमुद्रा हृदि स्थिताः । तादृशैककरो ज्ञानमुद्रावानिति कथ्यते ॥ १७० ॥ मुदं गिरंति यन्मन्त्रसाधना[1]न्युरुबुध्नकं । मुसलं वायुधं यस्य स देवो मुद्गरायुधः ॥ १७१ ॥

पूर्णपात्री कंबुधरो विधृतालिसमुद्गकः ॥
मातुलिंगधरश्चूतकलिकाभृत् कुठारवान् ॥४९॥

---

पाठा०-1 न्युरुबन्धकं.

टिप्प०-१ 'वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च' (श्वेता० ३।१८) इति श्रुतिः ।

पूर्णपात्रं याज्ञिकेषु प्रसिद्धं तद्युतो मखः । यद्वा सुधाघटयुतः पूर्णपात्रीति कीर्त्यते ॥ १७२ ॥ शंखस्य धारणाद्धस्ते देवः कंबुधरः स्मृतः। मद्यसंपुटकं धत्ते भृंगाणां संपुटायुते ॥ १७३ ॥ यो मदस्तं कटे धत्ते विधृतालिसमुद्गकः । बीजापूरफलं चाम्रमंजरीं च करे दधत् ॥ १७४ ॥ मातुलिंगधरश्चूतकलिकाभृच्च कथ्यते । योगिज्ञानं केवलाख्यं कुठारं तस्य साक्ष्यसौ ॥ १७५ ॥ ज्ञानार्थकात्तु शत्रंताद्धातोः सिद्धः कुठारवान्। 'कुठारं केवले रत' इति हैमकोशः। शुंडाग्रस्थस्वर्णकुंभपूर्णरत्नप्रदानतः ॥ १७६ ॥

**पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः ॥**
**भारतीसुंदरीनाथो विनायकरतिप्रियः ॥ ५० ॥**

पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः। भारतीसुंदरीनाथो ब्रह्मविष्णुशिवात्मकः ॥ १७७ ॥ लक्ष्मीवाचकमीकारं प्रश्लिष्यार्थोऽयमूह्यतां। विनायका ग्रहाः केचित्तैः सह क्रीडनं प्रियं ॥ १७८ ॥ पक्षिराजेन वाऽस्येति विनायकरतिप्रियः ।

**महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः ॥**
**रमारमेशपूर्वांगो दक्षिणोमामहेश्वरः ॥ ५१ ॥**

महालक्ष्मीसिद्धलक्ष्म्यावस्य द्वे वल्लभे इति ॥ १७९ ॥ महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः । अथ नामचतुष्केन देवस्यावरणात्मिकाः ॥ १८० ॥ प्राच्यामवाच्यां चोदीच्यां प्रतीच्यां च स्थिताः क्रमात् । रमादामोदरौ गौरीशंकरौ भूमिसूकरौ ॥ १८१ ॥

महीवराहवामांगो रतिकंदर्पपश्चिमः ॥
आमोदमोदजननः सप्रमोदप्रमोदनः ॥ ५२ ॥

रतिमाराविति द्वंद्वदेवताः कीर्तिताः स्फुटाः ।

समेधितसमृद्धश्रीऋद्धिसिद्धिप्रवर्तकः ॥
दत्तसौमुख्यसुमुखः कांतिकंदलिताश्रयः ॥५३॥

ततः षण्मिथुनीवत्त्वात् षडस्रावरणे स्थिताः ॥ १८२ ॥ छंदोवशादक्रमेण प्रोक्ता द्वादशनामभिः। ऋद्ध्यामोदौ समृद्धि-प्रमोदौ च मिथुनी उभे ॥१८३॥ सुमुखः कांतिरित्येकं दुर्मुखो मदनावती मदद्रवेत्येकं । विघ्नो विघ्नकृद्द्राविणीति च ॥१८४॥ आमोदं मोदयत्येष प्रमोदस्य प्रमोदनैः । सहितश्च समृद्ध्या श्रीरनेनैवाभिवर्धिता ॥ १८५ ॥ ऋद्धिदेव्यां स्थिता सिद्धिः प्रवर्तयति चाप्यसौ । सुमुखः स्वेषु सौमुख्यं यत्प्र-सादात्प्रतिच्छति ॥ १८६ ॥ यद्वशादाश्रयः कांतेर्देव्या अंकुरितोऽभवत् ।

मदनावत्याश्रितांघ्रिः कृत्तदौर्मुख्य दुर्मुखः ॥
विघ्नसंपल्लवोपघ्नसेवोन्निद्रमदद्रवः ॥ ५४ ॥

धृतवान् मदनावत्या दौर्मुख्यं दुर्मुखे स्थितं ॥ १८७ ॥ कृत्तं छिन्नमनेनैव सम्यग्विघ्नस्य पल्लवः। विस्तारस्तस्य चोपघ्न आश्रयो यस्य सेवने ॥१८८॥ उन्निद्रानलसैवास्ते देवी नाम्ना मदद्रवा ।

पाठा०-1 अमोद. 2 कृतवैमुख्यदुर्मुखः.

**विघ्नकृन्निघ्नचरणो द्राविणीशक्तिसत्कृतः ॥**
**तीव्राप्रसन्ननयनो ज्वालिनीपालितैकदृक्॥५५॥**
**मोहिनीमोहनो भोगदायिनीकांतिमंडितः ॥**
**कामिनीकांतवक्त्रश्रीरधिष्ठितवसुंधरः ॥ ५६ ॥**

भक्त्या विघ्नकृतोऽधीने[1] यस्य तच्चरणांबुजे ॥ १८९ ॥ द्राविणीसंज्ञया शक्त्या सत्कृतोऽयं गणाधिपः । यत्त्वत्र–प्राचां षोडशसु नामस्वर्थांतरवर्णनं पाठांतरावलंबनं, उपघ्नपदे विसर्गोपलापनेनोद्राविणीति पदकल्पनादिना च, क्वचिन्नामैक्य-करणं च,–तत्सर्वमसांप्रदायिकत्वात् परशुरामकृतकल्पसूत्रा-दिविरोधाच्च मनसापि न स्मर्तव्यम् । अथ नामानि षट् प्राह षड्भिस्तीव्रादिशक्तिभिः ॥१९०॥ तीव्रायां यस्य नयने प्रसाद-पिशुनेक्षणे । ज्वालिन्या रक्षणे मुख्या यद्दृष्टिर्मोहिनीमपि ॥ १९१ ॥ यो मोहयति तस्मै श्रीगणाधिपतये नमः । त्वं भोगदायिनी शक्तेः कान्त्या मंडितपादुकः ॥ १९२ ॥ कामिन्याः शोभने वक्त्रे या शोभातत्स्वरूपकः । वसुंधरा-भिधा देवी जाता त्वत्तः प्रतिष्ठिता ॥ १९३ ॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ॥
गणेशनामखद्योते तृतीयमभवत् शतम् ॥ ३०० ॥

---

पाठा०–1 अधीरे.

वसुंधरामदोन्नद्धमहाशंखनिधिप्रभुः ॥
नमद्वसुमतीमौलिमहापद्मनिधिप्रभुः ॥ ५७ ॥

अथ द्वे नामनी प्राह मिथुनद्वयबोधिके । महाशंखमहापद्माभिधे द्वे निधिदैवते ॥ १९४ ॥ वसुंधरा वसुमतीत्येते द्वे तत्तदंगने । गणेशादिस्वनाथान्तैः सम्यगाराधितो यतः ॥ १९५ ॥ ( सर्वसद्गुरुव्याख्या )

सर्वसद्गुरुसंसेव्यः शोचिष्केशहृदाश्रयः ॥
ईशानमूर्धादेवेंद्रशिखा पवननंदनः ॥ ५८ ॥

सर्वसद्गुरुसंसेव्य इति तेन निगद्यसे । गार्हपत्यादयः पंच शोचिष्केशास्तदीयहृत् ॥१९६॥ आश्रयो यस्य तद्ध्येयः शोचिष्केशहृदाश्रयः । ईशानस्यापि मूर्धा त्वं देवेन्द्रस्यापि वै शिखा ॥ १९७ ॥ शक्रशंकरयोर्मान्य इति नामद्वयाशयः । जीवनान्नान्य आनंदस्तत्प्राणपवनात्मकः ॥१९८॥ प्राणस्यापि च यः प्राणः स स्यात्पवननंदनः ।

अग्रप्रत्यग्रनयनो दिव्यास्त्राणां प्रयोगवित् ॥
ऐरावतादिसर्वाशावारणावरणप्रियः ॥ ५९ ॥

अग्रं सूक्ष्मं चोत्तमं वा प्रत्यग्रं जीर्णतोज्झितम् ॥ १९९ ॥ तादृग्लोचनवानग्रप्रत्यग्रनयनो मतः । अस्त्रविद्याप्रवर्तृत्वाद्दिव्यास्त्राणां प्रयोगवित् ॥ २०० ॥ क्रीडयैवावृणोत्येष युगपद्दिग्गजानपि । ऐरावतादिसर्वाशावारणावरणप्रियः ॥ २०१ ॥

वज्राद्यस्त्रपरीवारो गणचंडसमाश्रयः ॥
जयाजयपरीवारो विजयाविजयावहः ॥ ६० ॥

वज्रादीनि यदस्त्राणि तैरिंद्रादिभिरावृतः । वज्राद्यस्त्रपरीवार आयुधावरणोऽपि वा ॥ २०२ ॥ गणाश्चंडादयो यद्वा ये प्रचंडा गणेष्वपि । तेषां बलप्रदातृत्वाद्गणचंडसमाश्रयः ॥ २०३ ॥ अथाष्टनामभिः[1] प्राह प्राणशक्त्या[2] अभिन्नतां । जया च विजया पश्चादजया चापराजिता ॥ २०४ ॥ नित्या विलासिनी शौंडी ततोऽनंताथ मंगला । प्राणशक्त्यादिदेवीनामेताः स्युः पीठशक्तयः ॥ २०५ ॥ जया चाप्यजयेत्येतत्समाहारो जयाजयं । ते एवास्य परीवारो द्वितीयं नाम तु स्फुटं ॥ २०६ ॥

अजितार्चितपादाब्जो नित्यानित्यावतंसितः ॥
विलासिनीकृतोल्लासः शौंडीसौंदर्यमंडितः ६१

तृतीयनामन्यजितापदेनोक्ता पराजिता ।

अनंतानंतसुखदः सुमंगलसुमंगलः ॥
इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ६२

सप्तमे नाम्न्यनंताया अनंतसु[3]खदायकः ॥ २०७ ॥ शोभना मंगला यस्मिंस्तत्तु पीठं सुमंगलम् । तादृक् सुमंगलं यस्मात् सुमंगलसुमंगलः ॥ २०८ ॥ प्राचा त्वेतानि नामान्यन्यथा व्याख्यातानि । प्रथमनामनि जय इत्यस्य भिन्नपदत्वं च स्वीकृतं,–तदसांप्रदायिकत्वादुपेक्ष्यं । या ब्रह्मण्यु-

पाठा०–1 शक्तिभिः. 2 क्त्याद्यभिन्नता. 3 शुभ.

ङ्गता वृत्तिः स्वर्गादावीक्षणात्मिका । ज्ञानेच्छाकृतिरूपा सेत्य-
स्माभिः श्रुतियुक्तिभिः ॥ २०९ ॥ वामकेश्वरतंत्रस्य व्याख्यायां
प्रतिपादितं । तादृग्वृत्तियुतं ब्रह्मनाम्नैकेनेह कथ्यते ॥ २१० ॥
इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेवितः ।

सुभगासंश्रितपदो ललिताललिताश्रयः ॥
कामिनीकामनः काममालिनीकेलिलालितः ६३

सैव वृत्तिर्भिद्यमाना तत्तद्धर्मैकयोगतः ॥ २११ ॥ सुभगा-
दिकरौ ह्येते नामभागित्यपीरितं । तत्र या सुभगादेवी तया
सेव्यांघ्रिरप्यसौ ॥ २१२ ॥ गणेशसुंदरीमंत्राल्ललिताललिता-
श्रयः । कामिनी या कामकला कामेशी काममालिनी
॥ २१३ ॥ सरस्वत्याश्रयादीनि त्रीणि स्पष्टार्थकान्यथ ।

सरस्वत्याश्रयो गौरीनंदनः श्रीनिकेतनः ॥
गुरुगुप्तपदो वाचासिद्धो वागीश्वरीपतिः ॥६४॥
नलिनीकामुको वामारामो ज्येष्ठामनोरमः ॥
रौद्रीमुद्रितपादाब्जो हुंबीजस्तुंगशक्तिकः ॥६५॥

गणक्रीडादिगुरुभिर्ग्रंथादौ प्रतिपादितैः ॥ २१४ ॥ गोपित-
त्वात्पदस्यास्य गुरुगुप्तपदो मतः । वाचा सिद्ध्यति यद्भक्त्या स
वाचासिद्ध इष्यते ॥ २१५ ॥ वागीश्वरी तु नकुली नलिनी
तु सुरापगा । तयोः पतिः कामुकोऽथ वामा ज्येष्ठा च
रौद्रिका ॥ २१६ ॥ ब्रह्मविष्णुहरा एव शक्तिरूपधरा यदि ।
वामैव यस्य रामा स ज्येष्ठा यस्य मनोरमा ॥ २१७ ॥

रौद्रीमुद्रितपादाब्जस्तदंजलिधृतांघ्रिकः । हुंकार एव चरमो वक्रतुंडषडक्षरे ॥ २१८ ॥ बीजं सर्वपुमर्थानां हुंबीजस्तेन गीयसे । तत्रत्य एव तुंकारोऽष्टाविंशत्यर्णगं च कं ॥ २१९ ॥ शक्तीस्ताः सकलौन्नत्यशक्त्या वान् तुंगशक्तिकः ।

**विश्वादिजननत्राणः स्वाहाशक्तिः सकीलकः ॥**
**अमृताब्धिकृतावासो मदघूर्णितलोचनः ॥६६॥**

हिरण्यगर्भो विश्वादिस्तदुत्पादनपालने ॥ २२० ॥ यस्मात् स्यातां स विश्वादिजननत्राण उच्यते । जननत्राणवच्छक्तो होमे कंबलने प्रियः ॥२२१॥ स्वाहेति मंत्रशक्तिर्वा स स्वाहाशक्तिरीरितः । मंत्रे मृत्युंजये सौरे स इत्यर्णः सकीलकः ॥ २२२ ॥ वाचको यस्य मंत्रांगसाहित्याद्वा सकीलकः । सुरासुधेक्षुसिंधुस्थो यस्तत्पानरतश्च सः ॥ २२३ ॥ अमृताब्धिकृतावासो मदघूर्णितलोचनः ।

**उच्छिष्टगण उच्छिष्टगणेशो गणनायकः ॥**
**सार्वकालिकसंसिद्धिर्नित्यशैवो दिगंबरः ॥६७॥**

उच्छिष्टगण उत्कृष्टा गणाः शिष्टाश्च यस्य सः ॥ २२४ ॥ उच्छिष्टं नामरूपं चेत्याद्यृचः सप्तविंशतिः । आथर्वणो यं वदंति स गणेशो न चापरः ॥ २२५ ॥ मोदकं भक्षयन्देवो ध्येयो मंत्रो नवाक्षरैः । साधकेनेति वोच्छिष्टगणेश इति कथ्यसे ॥ २२६ ॥ गणनं गुणसंख्यानमयते गणनायकः । सार्वकालिकसंसिद्धिः शाश्वत्यो यस्य सिद्धयः ॥ २२७ ॥

नित्यशैवः कदाप्यस्य शिवभावनया यतः । दिशमंबरयत्या-
वृणोति स दिगंबरः कथितः ॥ २२८ ॥

**अनपायोऽनंतदृष्टिरप्रमेयोऽजरामरः ॥**
**अनाविलोऽप्रतिरथो ह्यच्युतोऽमृतमक्षरम् ॥६८॥**
**अप्रतर्क्योऽक्षयोऽजय्योऽनाधारोऽनामयोऽमलः ॥**
**अमोघसिद्धिरद्वैतमघोरोऽप्रमिताननः ॥ ६९ ॥**

अनपगतशुभावहविधिरनपायो नाशविरहाद्वा । अगणित-चक्षुर्नाशविरहितज्ञानोऽप्यनंतदृष्टिरिति ॥२२९॥ ज्ञानेंद्रिय-वाङ्मनसावगम्यत्वादप्रमेय इति । विजरो[1] विमृत्युरित्याम्ना-नादजरामरो गदितः ॥ २३० ॥ अविघ्नकधर्मततिभिरकलुषि-तत्वादनाविलोऽपि भवान् । अप्रतिरथ इति गदितो नास्ति यतस्ते प्रतिद्वंद्वी ॥ २३१ ॥ च्युतिराहित्यादच्युतनामा नारायणादभेदाद्वा । पीयूषं मोक्षो वा त्वमेव भगवन् ततोऽ-स्यमृतम् ॥२३२॥ अक्षरमश्नोतेर्व्याप्त्यर्थादथवा क्षयाभावात् । वेदाननुमततर्कागम्यत्वादप्रतर्क्यस्त्वम् ॥ २३३ ॥ न क्षतिरपि न च वसतिर्जेतुमशक्योऽक्षयोऽजय्यः । जगदाधारस्य तवा-धारो नास्तीत्यनाधारः ॥ २३४ ॥ आमयमालिन्याभ्यामगृही-तत्वादनामयोऽस्यमलः । सिद्धिर्भवत्यर्थवती नामोघा भक्तस्य तेन त्वममोघसिद्धिः । द्वैतप्रपञ्चोपशमाच्चतुर्थमद्वैत-मित्युच्यस ईशरूपः ॥ २३५ ॥ अघोरमूर्तिः शिव इत्यघोरो

---

टिप्प०—१ 'विजरो विमृत्युर्विशोको विजिघित्सः' (छां. ८।१।५) इति श्रुतिः ।

न मज्जनानामभयंकरो वा । असंख्यवक्त्रोऽस्यमितानि यस्मात् संजीवनान्यप्रमिताननस्त्वम् ॥ २३६ ॥

**अनाकारोऽब्धिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः ॥**
**आधारपीठ आधार आधाराधेयवर्जितः ॥७०॥**

भक्ततोषार्थमाकाराः सगुणाः संति यद्यपि । तथापि त्वमनाकारः परमार्थदृशा विभो ॥२३७॥ भूवारितेजोमरुतां बलानि संस्तंभनक्लेदनदाहशोषाः । त्वयि क्षमास्ते न भवंति तेन त्वमब्धिभूम्यग्निबलघ्न उक्तः ॥२३८॥ सच्चित्सुखैकमयता तु तव स्वरूपलक्ष्मप्रपंचकलना तु तटस्थलक्ष्म । न व्यज्यते तदुभयं हि बहिर्मुखानां अव्यक्तलक्षण इति प्रथितोऽसि तेन ॥ २३९ ॥ आङ् व्यापनं वक्ति धरैव धारं शिवावधि क्ष्मावधितत्त्वपंक्तेः । षट्त्रिंशतः[1] पीठ इवासनं त्वमाधारपीठोऽसि ततो नमस्ते ॥ २४० ॥ अकारो वासुदेवः स्यादाकारस्तु पितामहः । तावुभौ यो धारयति स आधारो गणाधिपः ॥ २४१ ॥ सर्वाधारस्याधारांतरविरहादतात्त्विकत्वाच्च । एषामाधेयानामाधाराधेयवर्जितोऽसि ततः ॥ २४२ ॥

**आखुकेतन आशापूरक आखुमहारथः ॥**
**इक्षुसागरमध्यस्थ इक्षुभक्षणलालसः ॥ ७१ ॥**

आखुवाहं ध्वजीकुर्वन् दिशस्तृष्णां च पूरयन् । आखुकेतन आशापूरक आखुमहारथः ॥ २४३ ॥ इक्षुशब्दादिमं नामयुगलं प्रकटार्थकं ।

---

पाठा०-1 षड्विंशतः.

इक्षुचापातिरेकश्रीरिक्षुचापनिषेवितः ॥
इंद्रगोपसमानश्रीरिंद्रनीलसमद्युतिः ॥ ७२ ॥

इक्षुचापातिरेकश्रीर्मदनाधिककांतिमान् ॥२४४॥ चापदेवतया मूर्तिमत्या पंचशरेण वा । नित्यं यः सेव्यते सोऽयमिक्षुचापनिषेवितः ॥ २४५ ॥ एतस्यैवारक्तरूपं भास्वराभास्वरासिते ।

इंदीवरदलश्याम इंदुमंडलनिर्मलः ॥
इध्मप्रिय इडाभाग इराधामेंदिराप्रियः ॥ ७३ ॥

शुक्लं च भास्वरं ध्येयं कामनाभेदतो जनैः ॥ २४६ ॥ युगभेदेन भेदस्तत्पुराणेऽपि निरूपितः । इति ध्वनयितुं नामचतुष्कं प्रकटार्थकं ॥ २४७ ॥ श्रौतस्मार्ताग्निरूपत्वाद्भवानिध्मप्रियो मतः। इडा मही हविः शेषो गौश्च भागस्तवैव यत् ॥ २४८ ॥ ऋत्विग्याज्यादिरूपत्वादिडाभाग इतीर्यसे ॥ इरेति पृथ्वी तद्धामा तदंतर्यमवस्थितः ॥२४९॥ [1]यः पृथिव्यां तिष्ठतीति बृहदारण्यकश्रुतेः । लक्ष्मीपूज्योऽथवा विष्णुरूपत्वादिंदिराप्रियः ॥ २५० ॥

इक्ष्वाकुविघ्नविध्वंसी इतिकर्तव्यतेप्सितः ॥
ईशानमौलिरीशान ईशानसुत ईतिहा ॥ ७४ ॥

इक्ष्वाकुः कटुतुंबी तत्तुल्यप्रत्यूहनाशनात् । इक्ष्वाकुविघ्नविध्वंसी राज्ञो वा विघ्ननाशनात् ॥२५१॥ इतिकर्तव्यताशब्दः

---

टिप्प०–१ 'यः पृथिव्यां तिष्ठन्' ( बृ. ३।७।९ ) इति श्रुतिः ।

ऋत्वंगस्तोमवाचकः । तामपेक्ष्य ददत्कामानितिकर्तव्यते-प्सितः ॥ २५२ ॥ नरभूतसुरेशाद्या ईशाना बहवोऽमिताः । तेषामेषोऽधिको मौलिरमितैश्वर्ययोगतः ॥ २५३ ॥ अनयन् जीवयन्नीशानीशान इति कीर्त्यसे । ईशानेन सुतः सोमरूप-स्तस्य सुतोऽथवा ॥ २५४ ॥ अतिवृष्टिमनावृष्टिं मूषकान् शल-भान् शुकान् । स्वचक्रं परचक्रं च विनिघ्नन्नीतिहा मतः ॥२५५॥

**ईषणात्रयकल्पांत ईहामात्रविवर्जितः ॥**
**उपेंद्र उडुभृन्मौलिरुंडेरकबलिप्रियः ॥ ७५ ॥**

लोकपुत्रधनेच्छानां तिसृणां प्रलयात्मकः । ईषणात्रय-कल्पांतो नृणां वैराग्यदायकः ॥ २५६ ॥ निश्चेष्टचित्स्वरूप-त्वादीहामात्रविवर्जितः । वामनेन सहाभेदादुपेंद्र इति कीर्तितः ॥ २५७ ॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ।
गणेशनामखद्योते चतुर्थमभवच्छतम् ॥ ४०० ॥

---

बिभ्रत्युडूनि या द्यौः सा यस्य विश्वात्मनः शिरः । सत्त्व-मेवोडुभृन्मौलिर्द्यां मूर्धानमिति श्रुतेः ॥ २५८ ॥ यद्वा चंद्रा-वतंसत्वादुडुभृन्मौलिरुच्यसे । उंडेरकाः पूपभेदा वर्तुला-कृतयोऽल्पकाः ॥ २५९ ॥ उपहारास्तवेष्टा इत्युंडेरकबलि-प्रियः । प्राचा तु—रुंडरक इति रेफादिपाठमंगीकृत्य—रुंडं प्रेतं तद्वदचेतनानि ब्रह्मांडानि तत्प्रेरकस्तत्पतिः समष्टिजीवस्तत्प्रिय इति व्याख्यातं,—तदुकारादिनामप्राये तस्यासंगतत्वादुपेक्ष्यं ।

**उन्नतानन उत्तुंग उदारत्रिदशाग्रणीः ॥**
**ऊर्जस्वानूष्मलमद ऊहापोहदुरासदः ॥ ७६ ॥**

उत्कृष्टानामजादीनां प्राणनादुन्नतानन: ॥ २६० ॥ तुंगा नाम नदी काचित् वराहवपुषस्तव । दंष्ट्राया उद्गता तस्माद्भवानुत्तुंग ईरितः ॥ २६१ ॥ उदारो दातृमहतोस्त्रिदशो देव उच्यते । महादेवादपि श्रेष्ठ उदारत्रिदशाग्रणीः ॥२६२॥ ऊर्जस्वानपि तेजोवानत एव मदोदकं । ऊष्मं स्रवति गंडाभ्यां तेनोष्मलमदो भवान् ॥ २६३ ॥ ऊहो वितर्कस्तत्त्वस्यापोहस्तात्त्विकबाधनम् । ताभ्यां दुरासदोऽप्राप्य ऊहापोहदुरासदः ॥ २६४ ॥

**ऋग्यजुःसामसंभूतिर्ऋद्धिसिद्धिप्रवर्तकः ॥**
**ऋजुचित्तैकसुलभ ऋणत्रयविमोचकः ॥ ७७ ॥**

ऋग्यजुःसामसंभूतिर्यस्य निःश्वसितं त्रयी । राज्याणि[1]मादिदातृत्वादृद्धिसिद्धिप्रवर्तकः ॥२६५॥ दृश्यते[2] त्वग्र्यया बुद्ध्येत्युक्तेर्यद्धिमलं मनः । तद्ग्राह्यऋजुचित्तैकसुलभस्तेन गीयसे ॥२६६॥ पुत्रीयंति यियक्षंति वेदानिच्छंति ये द्विजाः । तत्कामनापूरकत्वादृणत्रयविमोचकः ॥ २६७ ॥

**लुप्तविघ्नः स्वभक्तानां लुप्तशक्तिः सुरद्विषाम् ॥**
**लुप्तश्रीर्विमुखार्चानां लूताविस्फोटनाशनः ७८**

---

टिप्प०-१ 'अणिमा महिमा चैव लघिमा गरिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥' इत्यादयः सिद्धयः । २ 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' (कठ. ३।१२) इति श्रुतिवचनम् ।

लुप्तशब्दादिकं नामत्रितयं प्रकटार्थकं । दंतलूतादयो रोगा आंतरा बहिरामयाः ॥ २६८ ॥ स्फोटाद्यास्तान्निहंतीति लूताविस्फोटनाशनः ।

एकारपीठमध्यस्थ एकपादकृतासनः ॥
एजिताखिलदैत्यश्रीरेधिताखिलसंश्रयः ॥७९॥
ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः ॥
ऐरंमदसमोन्मेष ऐरावतनिभाननः ॥ ८० ॥

एकारपीठमध्यस्थस्त्रिकोणांतःस्थबिंदुगः ॥ २६९ ॥ काश्यामेकपदा तिष्ठन्नेकपादकृतासनः । एजिताखिलदैत्यश्रीः कंपितासुरसंपदः ॥ २७० ॥ स्वाश्रिता वर्धिता येनैधिता चाखिलसंश्रयः । ऐश्वर्यनिधिरैश्वर्यं भक्तेषु निदधाति यः ॥ २७१ ॥ ईश्वरेषु यदैश्वर्यं संपत्तिः सा त्वमेव हि । एषाऽस्य[1] परमा संपदिति बोधयति श्रुतिः ॥ २७२ ॥ दत्से सुतादीन्स्वर्गे चेत्यैहिकामुष्मिकप्रदः । विद्युत्तुल्यस्तवोन्मेषः क्षणाद्भासितभासि च ॥ २७३ ॥ ऐरंमदसमोन्मेषः स्वार्थे ज्ञेयोऽणिरंमदात् । ऐरावतसमास्यत्वादैरावतनिभाननः ॥ २७४ ॥

ॐकारवाच्य ॐकार ओजस्वानोषधीपतिः ॥
औदार्यनिधिरौद्धत्यधुर्य औन्नत्यनिस्वनः ॥८१॥

क्लेशादिरहितमीश्वरमुक्त्वाग्रे तस्य वाचकः प्रणवः । इति

टिप्प०—१ 'एषाऽस्य परमा संपत्' ( बृ. ४।३।३२ ) इति श्रुतिः ।

योगशास्त्रसूत्रे कथनादोंकारवाच्यस्त्वम् ॥ २७५ ॥ ॐइति शब्दोऽपि त्वंभेदाभावेन वाच्यवाच्यवाचकयोः । अत एव त्वयि वाक्यैराकारोऽपि प्रत्ययो युक्तः ॥ २७६ ॥ ओजोऽष्टमधातुरिति प्रोक्तं यद्वेदभाष्यकृता । शौर्योत्कर्षनिदानं तेजस्तद्वांस्त्वमोजस्वान् ॥ २७७ ॥ ओषधीपतिरौदार्यनिधिरित्याह्वयौ स्फुटौ ॥ औद्धत्यमुद्धतत्वं यत् स्वभक्तानुजिघृक्षया ॥ २७८ ॥ स्वोत्कर्षद्योतनं तत्र श्रेष्ठ औद्धत्यधुर्यकः । बृंहितं यस्य सर्वोच्चं सस्यादौन्नत्यनिस्वनः ॥ २७९ ॥

**अंकुशः सुरनागानामंकुशः सुरविद्विषाम् ॥**
**अःसमस्तविसर्गांतपदेषु परिकीर्तितः ॥ ८२ ॥**

अंकुशः सुरनागानां त्रैलोक्यस्य नियामकः । ऊर्ध्वं सुरा अधो नागा मर्त्यलोकोपलक्षणं ॥ २८० ॥ द्विषः सुराणां च विदां सुष्ठु सम्यग्रविद्विषां । निग्राहकत्वान्निर्दिष्टोऽस्यंकुशः सुरविद्विषाम् ॥ २८१ ॥ अकाराद्येकपंचाशद्विसर्गांतार्णबोधितः । अःसमस्तविसर्गांतपदेषु परिकीर्तितः ॥ २८२ ॥ प्राचा—त्वसमस्तेति विसर्गनिर्मुक्तमाद्यक्षरं पठित्वा केवलविसर्गांतप्रथमैकवचनपदैः कीर्तित इति व्याख्यातं,—तन्मातृकाक्रमाननुगणत्वादचिंत्यम् ।

**कमंडलुधरः कल्पः कपर्दी कलभाननः ॥**
**कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः ॥ ८३ ॥**

कमंडलुधरः शृंगेनामृतकुंभधृक् । कल्पः प्रलयकाला-

त्मा समर्थः कल्पनेऽपि वा ॥ २८३ ॥ वराटधारी मल्लारिस्त्वं कपर्द्यथवा जटी । कलो नादो भा तु दीप्तिरननं प्राणनं मतं ॥२८४॥ नादकांत्युज्जीवकत्वात्कथ्यते कलभाननः । कर्मसाक्षी त्वदृष्टानामपि द्रष्टासि कर्मणां ॥ २८५॥ कर्मठप्रेरणादन्तः कर्मकर्ता भवानपि । स्वर्गापवर्गदातृत्वात् कर्माकर्मफलप्रदः ॥ २८६ ॥

**कदंबगोलकाकारः कूष्मांडगणनायकः ॥**
**कारुण्यदेहः कपिलः कथकः कटिसूत्रभृत् ८४**

सर्वनाड्युद्गमस्थानं कदंबकुसुमाकृतिः । परितःसंवृतात्माभिर्हृदि काप्यस्ति देवता ॥ २८७ ॥ कदंबगोलकाकार इति तद्रूप उच्यसे । दुष्टग्रहाणां नेता त्वं कूष्मांडगणनायकः ॥ २८८ ॥ कारुण्यदेहः करुणामूर्तित्वात्कपिलो मुनिः । कर्णतो वाऽसि कथकः संप्रदायान्प्रवर्तयन् ॥२८९॥ रत्नप्रोतस्वर्णकांचीधारणात्कटिसूत्रभृत् ।

**खर्वः खड्गप्रियः खड्गखांतान्तस्थः खनिर्मलः ॥**
**खल्वाटशृंगनिलयः खट्वांगी खदुरासदः ॥८५॥**

खर्वो वामनरूपत्वात्खड्गो गंडकसंज्ञकः ॥ २९० ॥ मृगोऽसिर्वा प्रियो यस्य स तु खड्गप्रियो मतः ॥ खड्गशब्दे खात्परो डस्तदंते गाक्षरे तव ॥ २९१ ॥ बीजे तिष्ठस्यतः खड्गखांतांतस्थ इतीर्यसे । आकाशवत्सर्वगोऽपिनिर्लेपोऽतः खनिर्मलः ॥ २९२ ॥ वृक्षा एव गिरेः केशाः खल्वाटस्तैर्विवर्जितः ।

खल्वाटशृंगनिलयस्तच्छृंगेऽपि वसन् मतः ॥२९३॥ खट्वांगीति भवान् ख्यातः खट्वांगाख्यायुधं दधत्। अमूर्तो व्योमवद्धर्तुं अशक्यः खदुरासदः ॥ २९४ ॥

**गुणाढ्यो गहनो गस्थो गद्यपद्यसुधार्णवः ॥**
**गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः ॥८६॥**

अनंतकल्याणगुणो गुणाढ्यो गंतुं न शक्यो गहनोऽसि गस्थः। बीजे निजे तिष्ठसि गद्यपद्यसुधार्णवः काव्यरसाकरत्वात् ॥ २९५ ॥ गदितुं योग्यं गद्यं न निषिद्धं साम ते प्रियं गानं। तेनासि गद्यगानप्रियोऽथ गर्जोऽसि मेघनादात्मा ॥ २९६ ॥ नादात् गीतादयः शब्दा नादार्थादमरादयः। जातास्तद्द्वयरूपत्वाद्गीतगीर्वाणपूर्वजः ॥ २९७ ॥

**गुह्याचाररतो गुह्यो गुह्यागमनिरूपितः ॥**
**गुहाशयो गुहाब्धिस्थो गुरुगम्यो गुरोर्गुरुः ८७**

गुहाप्रविष्टावात्मानौ गुह्यौ तौ मनसा चरन्। अंतर्मुखस्तत्र तुष्टो गुह्याचाररतो मतः ॥ २९८ ॥ गुह्य एकांतवेद्यत्वाद्धितकारी गुहाय वा। रहस्यतंत्रवेद्यत्वाद्गुह्यागमनिरूपितः ॥ २९९ ॥ गुहायां हृदयाकाशे शेते यः स गुहाशयः। अव्याकृतं नभोगूढमगाधं च गुहाब्धिवत् ॥ ३०० ॥ अधितिष्ठसि तत्तेन गुहाब्धिस्थ इतीर्यसे। गुरुगम्यो गुरुप्रोक्तयोगोपायेन लभ्यसे ॥ ३०१ ॥ वेदा अध्यापिता येन ब्रह्मणे स गुरोर्गुरुः। शिवसूत्रे गुरुरुपाय इत्येवं हि वर्णितं ॥३०२॥

घंटाघर्घरिकामाली घटकुंभो घटोदरः ॥
चंडश्चंडेश्वरसुहृच्चंडीशश्चंडविक्रमः ॥ ८८ ॥

घंटेव मंजुनादा घर्घरिकाः किंकिणीभेदाः । तद्धारी घंटाघर्घरिकामालीति बाललीला ते ॥ ३०३ ॥ कुंभौ न्युब्जाम्बुघटाकारौ घटकुंभस्ततो मतः । घटोदरो बृहत्कुक्षिश्चंडो भूरिपराक्रमः ॥ ३०४ ॥ चंडेश्वरः सुहृद्यस्य शैवश्चंडेश्वरः सखा । चंडीशश्चंडिकानाथश्चंडा अत्यंतकोपनाः ॥ ३०५ ॥ तानाक्रम्य वशे कुर्वन्नाख्यातश्चंडविक्रमः ।

चराचरपतिश्चिंतामणिचर्वणलालसः ॥
छंदश्छंदोवपुश्छंदोदुर्लक्ष्यश्छंदविग्रहः ॥ ८९ ॥

चराचरपतिः स्थास्नुश्चरिष्णुर्जगदीश्वरः ॥ ३०६ ॥ चिंतामणिकामदुघाकल्पद्रुमगर्वचर्वणतः । चिंतामणिचर्वणलालस इति कथितोऽस्यचिन्त्यदानेन ॥ ३०७ ॥ गायत्र्याद्यात्मना छन्दो भवान् वेदमयात्मना । छन्दो वपुस्तथा छन्दो दुर्लक्ष्यो वेददुर्ग्रहः ॥ ३०८ ॥ स्वाभिप्रायानुसारीणि भक्तेः परवशानि वा । अवतारशरीराणि यस्य स च्छंदविग्रहः ॥ ३०९ ॥

जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ॥
जपो जपपरो जप्यो जिह्वासिंहासनप्रभुः ॥ ९० ॥

जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः । विश्वस्य

कारणं द्रष्टा नाथोऽधिष्ठानमेव च ॥ ३१० ॥ जपो जपपरो जप्यः कर्मकर्तृक्रियात्मकः । कीर्त्यमानं यस्य नाम जिह्वासिंहासनस्थितं ॥ ३११ ॥ ददाति पुरुषार्थान् स जिह्वासिंहासनप्रभुः ।

झलज्झल्लोल्लसद्दानझंकारिभ्रमराकुलः ॥
टंकारस्फारसंरावष्टंकारिमणिनूपुरः ॥ ९१ ॥

झलज्झल्लोल्लसद्दानझंकारिभ्रमराकुलः ॥३१२॥ नदंति गंडयो भृंगात्स्फुरन्मदपिपांसवः । कांस्यटंकारवत्स्फारो यस्य मंजुतरो रवः ॥ ३१३ ॥ टंकारस्फारसंराव इति लोके स गीयते । नदद्रत्नांघ्रिकटकष्टंकारिमणिनूपुरः ॥ ३१४ ॥

ठद्वयीपल्लवान्तःस्थसर्वमंत्रैकसिद्धिदः ॥
डिंडिमुंडो डाकिनीशो डामरो डिण्डिमप्रियः ९२

ठद्वयीपल्लवांतःस्थसर्वमंत्रैकसिद्धिदः । स्वाहान्ताखिलमंत्रोत्थमुख्यसिद्धिप्रदो यतः ॥३१५॥ डिंडीनामैकदेशेन डिंडिमौ न्युब्जदुंदुभी । तावेव कुंभौ यन्मुण्डे डिंडिमुंडः स उच्यते ॥ ३१६ ॥ डाकिन्यो नाम योगिन्यः काश्चित्सत्यगणादिमाः । षोढा न्यासादिषु स्पष्टा डाकिनीशस्तदीश्वरः ॥ ३१७ ॥ डामरस्तु महांस्तन्त्रविशेषो वा तदात्मकः । दुंदुभौ पटहध्वानेनानंदी डिण्डिमप्रियः ॥ ३१८ ॥

---

पाठा०-1 पटहध्वानेऽप्यानन्दी.

ढक्कानिनादमुदितो ढौंको ढुंढिविनायकः ॥
तत्त्वानां परमं तत्त्वं तत्त्वंपदनिरूपितः ॥ ९३ ॥

ढक्कानिनादमुदित इति नामद्वयाशयः । गत्यर्थात् ढौकतेर्ढौंकः सर्वगोवासिसर्ववित् ॥ ३१९ ॥

इति भारत्युपाख्यस्य भास्करानिचितः कृतौ ।
गणेशनामसाहस्रखद्योते पंचमं शतम् ॥ ५०० ॥

---

काशीखंडे ढुंढिधातुः प्रथितोऽन्वेषणार्थकः । विशिष्टो नायकोऽन्वेष्य इति ढुंढिविनायकः ॥३२०॥ तत्त्वानां तत्त्वं पंचविंशतितः परम् । त्रयं सृष्ट्यादि स्वप्नादि वाच्यं धर्मत्वमासदा ॥३२१॥ त्यक्त्वा धर्माणि भक्त्यैव तत्त्वंपदनिरूपितः ।

तारकान्तरसंस्थानस्तारकस्तारकान्तकः ॥
स्थाणुः स्थाणुप्रियः स्थाता स्थावरं जङ्गमं जगत् ९४

तारकान्तरसंस्थानस्तारकाक्ष्णः कनीनिका ॥ ३२२ ॥ तस्यां चिन्त्यो य[1] एषोऽन्तरक्षिणीत्यादिकश्रुतेः । तारको भवपाथोधेस्त्वमेव प्रणवो यथा ॥ ३२३ ॥ तारकासुरहंत्रात्मा[1] कथितस्तारकान्तकः । स्थाणुः कल्पान्तवाताग्निसलिलैरप्यकंपितः ॥ ३२४ ॥ स्थाणोः शिवस्य पुत्रत्वात्स्थाणुप्रिय

---

पाठा०-1 हंतृत्वात्.

---

टिप्प०- १ 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' ( छा. ४।१५।१ )इति श्रुतिः ।

इतीर्यसे । स्थाता युद्धेऽपि कल्पेऽपि निष्कम्पो गगनादिवत् ॥ ३२५ ॥ चराचरात्मकत्वेन स्थावरं जङ्गमं जगत् ।

दक्षयज्ञप्रमथनो दाता दानवमोहनः ॥
दयावान् दिव्यविभवो दण्डभृद्दण्डनायकः ॥९५॥

दक्षयज्ञप्रमथनो भवानेव शिवात्मना ॥ ३२६ ॥ दाता देयः शोधनार्थाद्भवान् पतितपावनः । दानवांस्तत्त्वविमुखान् कुर्वन् दानवमोहनः ॥ ३२७ ॥ दयावान् परदुःखानि प्रहारयितुमिच्छसि । प्राप्त्यर्थाद्दीव्यतेर्दिव्यविभवः प्रापकः श्रियाम् ॥३२८॥ दण्डभृत् कथितो दण्डनीतेरपरिलोपतः । यमेन्द्रादिषु ये दण्डास्तन्नेता दण्डनायकः ॥ ३२९ ॥

दंतप्रभिन्नाभ्रमालो दैत्यवारणदारणः ॥
दंष्ट्रालग्नद्विपघटो देवार्थनृगजाकृतिः ॥ ९६ ॥

यच्छिरःकंपमात्रेण मेघपंक्तिः प्रभिद्यते । दंतप्रभिन्नाभ्रमाल इति स त्वं निगद्यसे ॥ ३३० ॥ वारयन् दारयन् दैत्यान् दैत्यवारणदारणः । यस्य दंष्ट्रैकदेशेऽपि लग्ना रिपुगजच्छटाः ॥ ३३१ ॥ दंष्ट्रालग्नद्विपघट इति नाम्ना स गीयते । देवानां कार्यसिद्ध्यर्थं[1] येन मर्त्यद्विपाकृतिः ॥ ३३२ ॥ स्वीकृता स स्मृतो नाम्ना देवार्थनृगजाकृतिः ।

धनधान्यपतिर्धन्यो धनदो धरणीधरः ॥
ध्यानैकप्रकटो ध्येयो ध्यानं ध्यानपरायणः ॥९७॥

---

पाठा०-1 सिद्ध्यर्थमात्तमर्त्य.

धनधान्यप्रदत्वेन धनधान्यपतिर्भवान् ॥३३३॥ धन्यस्त्वं धनलब्धृत्वात्[1] पुण्यवान्वापि गीयसे। धनदो धनदानेन कुबेरात्मतयापि वा ॥ ३३४ ॥ शेषेणादिवराहेणाप्यभिन्नो धरणीधरः। मनसैवानुद्रष्टव्यो ध्यानैकप्रकटो भवान् ॥ ३३५ ॥ त्वमेव त्रिपुटी ध्येयो ध्यानं ध्यानपरायणः ॥

**नन्दो[2] नन्दिप्रियो नादो नादमध्यप्रतिष्ठितः ॥**
**निष्कलो निर्मलो नित्यो नित्यानित्यो निरामयः ९८**

नंदं[2] आनंदनीयोऽसि नंदिकेश्वरवल्लभः ॥ ३३६ ॥ नंदिप्रियोऽसि नादोऽसि योऽन्तर्दशविधध्वनिः। गम्यो नादानुसंधानान्नादमध्यप्रतिष्ठितः ॥३३७॥ निष्कलोऽवयवैर्हीनो निर्मलो दूषणोज्झितः। नित्यो नाशोज्झितो नित्यानित्यो [3]खोर्व्यादिरूपधृक् ॥ ३३८ ॥ अविद्यैव महारोगस्तदस्पृष्टो निरामयः।

**परंव्योम परन्धाम परमात्मा परं पदम् ॥**
**परात्परः पशुपतिः पशुपाशविमोचकः ॥ ९९ ॥**

अव्याकृतं यदाकाशं परंव्योम तदात्मकः ॥ ३३९ ॥ ज्योतिषामपि यज्ज्योतिस्तत्परन्धाम कथ्यते। परमः सर्वजीवेभ्यः परमात्मेति गद्यते ॥३४०॥ कैलासादिपदेभ्योऽपि [4]परमत्वात्परं पदम्। ब्रह्मविष्णुमहेशादप्युत्तमत्वात् परात्परः ॥ ३४१ ॥ ब्रह्मादिकीटकान्तानां पाता पशुपतिर्मतः। द्वि-

पाठा०–1 लब्धत्वात्. 2 नन्द्य. 3 खङ्गादि. 4 यत्परत्वात्.

पंचाशद्विधाः पाशाः सांख्यतंत्रादिषु स्फुटाः ॥ ३४२ ॥
ब्रह्मादीन्मोचयंस्तेभ्यः पशुपाशविमोचकः ।

**पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः ॥**
**पद्मप्रसन्ननयनः प्रणताज्ञानमोचनः ॥ १०० ॥**

पूर्णानन्दः क्रियाकर्तृकर्मभेदोज्झितं सुखं ॥ ३४३ ॥ भूम्यादिब्रह्मपर्यन्तानन्दान् शतगुणोत्तरान् । सर्वानप्यधरीकुर्वन् परानंदो महासुखम् ॥ ३४४ ॥ क्षरेभ्यः सर्वभूतेभ्यः कूटस्थादक्षरादपि । उत्तमत्वादनादित्वात् पुराणपुरुषोत्तमः ॥ ३४५ ॥ पद्मप्रसन्ननयनो विकसत्कमलेक्षणः । नमतां तत्त्वबोधेन प्रणताज्ञानमोचनः ॥ ३४६ ॥

**प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः ॥**
**फलहस्तः फणिपतिः फेत्कारः फाणितप्रियः १०१**

प्रमाणप्रत्ययातीतो नित्यज्ञानैकविग्रहः । प्रमाकरणजानां हि प्रमितीनामनित्यता ॥३४७॥ नमतां नाशयन् पीडां प्रणतार्तिनिवारणः । फलहस्तः स्वभक्तानामविलंबात्फलं ददत् ॥ ३४८॥ वासुकेरपि शेषस्य स्वामी फणिपतिर्मतः । फेत्कार इति तन्नाम्ना तन्त्रं तत्र निरूप्यसे[1] ॥ ३४९ ॥ [2]खण्डाह्वयेक्षुविकृतौ प्रीतिमान् फाणितप्रियः ॥

**बाणार्चिताङ्घ्रियुगलो बालकेलिकुतूहली ॥**
**ब्रह्म ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः ॥ १०२ ॥**

---

पाठा०–1 निरूप्यते. 2 गुडाह्वये.

बाणासुरेण पूज्यत्वाद्बाललीलासु कौतुकात् ॥ ३५० ॥ बाणार्चितांघ्रियुगलो बालकेलिकुतूहली । ब्रह्म त्वमेव वेदान्तवेद्यतत्त्वात्मकत्वतः ॥ ३५१ ॥ ब्रह्मार्चितपदो वेदैः श्लाघनीयं हि ते पदम् । प्राचा तु विष्णुविधिभ्यामर्चिते पदे यस्येत्यर्थकमेकमेवेदं 'ब्रह्मब्रह्मार्चितपदम्' इति नामेत्युक्तं,-तत्पक्षे सरूपैकशेषो दुर्वारः । ब्रह्मचारी भवान् येनाकृतदार-परिग्रहः ॥ ३५२ ॥ वाचस्पतिस्वरूपेण देवार्च्यत्वाद्बृहस्पतिः ।

**बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः ॥**
**बृहन्नादाग्र्यचीत्कारो ब्रह्माण्डावलिमेखलः १०३**

बृहतो ब्रह्मविष्ण्वादीनतिशेषो बृहत्तमः ॥ ३५३ ॥ वेदैकतत्परो धातुः श्रेष्ठो ब्रह्मपरो मतः । ब्रह्मण्य इति विख्यातो ब्राह्मणान् मानयन् स्वयम् ॥ ३५४ ॥ प्रिया ब्रह्म-विदो यस्य स मतो ब्रह्मवित्प्रियः । चीत्कारो गजशब्दः स मेघाशन्यादितो महान् ॥३५५॥ तवास्तीति बृहन्नादाग्र्य-चीत्कार इति स्मृतः । कटिसूत्रे किंकिणीव ब्रह्माण्डान्येव गुंफ-यन् ॥ ३५६ ॥ तादृग्दधद्विश्वरूपं ब्रह्माण्डावलिमेखलः ।

**भ्रूक्षेपदत्तलक्ष्मीको भर्गो भद्रो भयापहः ॥**
**भगवान् भक्तिसुलभो भूतिदो भूतिभूषणः १०४**

भ्रुवोरिङ्गितमात्रेण भक्तेभ्यः संपदो ददत् ॥ ३५७ ॥ भ्रूक्षेपदत्तलक्ष्मीको भर्गो गायत्र्युदीरितः । भद्रा मन्द्रा

---

पाठा०-1 यस्येत्यर्थः । एक. 2 दधच्चित्ररूपं.

मृगाश्चेति सन्ति द्विरदजातयः ॥ ३५८ ॥ तेषूत्तमा भद्रजाति-भंद्रस्त्वं तादृशाननः। द्वितीयाद्वै भयं यत्तदपघ्नंस्त्वं भयापहः ॥ ३५९ ॥ उत्पत्तिं च विनाशं च भूतानामगतिं गतिम्। वेत्सि विद्यामविद्यां चेत्युच्यसे भगवानिति ॥ ३६० ॥ भक्त्यैव लब्धुं यः शक्यः स भक्तिसुलभो महान्। सिद्धीर्दत्से[1] भस्म धत्से भूतिदो भूतिभूषणः ॥ ३६१ ॥

**भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः ॥**
**मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तमनोरमः ॥ १०५ ॥**

भव्यो भावुकरूपत्वाद्भाविविश्वात्मकत्वतः। भूतानां [2]भूजलादीनां पिशाचानां च देहिनाम् ॥ ३६२ ॥ अतीतानाम-धिष्ठानमतो भूतालयो भवान्। भोगदाता दुःखसुखसाक्षा-त्कारप्रदत्वतः ॥ ३६३ ॥ अविभक्ते भ्रुवोर्मध्ये ध्येयो भ्रूम-ध्यगोचरः। मंत्राः सामर्ग्यजूरूपा षडर्णैकाक्षरादयः ॥३६४॥ रहोविचाररूपाश्च राज्यभारोपयोगिनः। तद्रूपस्तदभिमानी देवता तस्य कारकः ॥ ३६५ ॥ तेन मन्त्रो मन्त्रपतिर्मन्त्री-त्यपि च गीयसे। मदः समाधिसंभूतध्येयोऽन्यविषयाग्रहः ॥ ३६६ ॥ रमसे तद्युते[3] चित्ते मदमत्तमनोरमः।

**मेखलावान् मन्दगतिर्मतिमत्कमलेक्षणः ॥**
**महाबलो महावीर्यो महाप्राणो महामनाः १०६**

मेखलावान् रशनया मौञ्ज्या वा विलसत्कटिः ॥ ३६७ ॥ येषां कापि गतिर्नास्ति मन्दानां ज्ञानकर्मणोः। अभावेन गति-

---

पाठा०–1 धत्से. 2 भूतलादीनां. 3 यस्याद्वायुता.

स्तेषामपि मन्दगतिस्ततः ॥ ३६८ ॥ यस्माज्ज्ञानयुता संपत्ताहग्यस्य निरीक्षणम् । इशैव दत्तधीश्रीको मतिमत्कमलेक्षणः ॥ ३६९ ॥ प्राचा तु मतिमानिति भिन्ननामत्वेन पठितं, तत्कमलेक्षणनाम्नो मकारप्राये पठितुमयुक्तत्वादुपेक्ष्यम् । बलवीर्यप्राणमनःसमष्ट्येकतनुर्भवान् । महाबलो महावीर्यो महाप्राणो महामनाः ॥ ३७० ॥ यज्ञ इत्यादिकं नामाष्टकं तु प्रकटार्थकं । रसः परम आनंदो रसो[1] वै स इति श्रुतेः ॥३७१॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ।
गणेशनामखद्योते षष्ठं शतमबीभवत् ॥ ६०० ॥

---

यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः ॥
यशस्करो योगगम्यो याज्ञिको याजकप्रियः १०७
रसो रसप्रियो रस्यो रञ्जको रावणार्चितः ।
रक्षोरक्षाकरो रत्नगर्भो राज्यसुखप्रदः ॥ १०८ ॥

शांतादौ मधुरादौ वा रसे प्रीत्या रसप्रियः । रस्यते चर्व्यते प्राज्ञैर्भूयो भूयोऽनुभूयते ॥ ३७२ ॥ स रस्यस्तन्मनोवृत्तिरञ्जनेनासि रञ्जकः । रावणैः शब्दनैर्वेदशास्त्रगीतादिपाठिभिः ॥ ३७३ ॥ दशास्येनापि सिद्ध्यर्थं पूजितो रावणार्चितः । रक्षांसि भस्मसात्कुर्वन् रक्षोरक्षाकरः स्मृतः ॥ ३७४ ॥ रत्नगर्भा मही तद्वान् रत्नगर्भस्तदाश्रये । राज्यं तज्जन्मसौख्यं च ददद्राज्यसुखप्रदः ॥ ३७५ ॥

---

टिप्प०—१ 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' (तै०२।७) इति श्रुतिः ।

लक्ष्यं लक्ष्यप्रदो लक्ष्यो लयस्थो लड्डुकप्रियः ॥
लानप्रियो लास्यपरो लोभकृल्लोकविश्रुतः १०९

तारेण धनुषा चित्तशरेण ब्रह्म वेधयेत्। इति श्रुत्या शरव्यस्त्वं तल्लक्ष्यमसि योगिनाम् ॥ ३७६ ॥ लक्ष्याणि चित्तस्थैर्यार्थं लक्षसंख्यान्यदीदृशन्। ऋषयस्तानि निर्विघ्नं ददल्लक्ष्यप्रदो भवान् ॥ ३७७ ॥ लक्ष्यो लक्षणया गम्यो महावाक्यगतैः पदैः। लयस्थः कल्पकालेऽपि तिष्ठंश्चित्तलयेऽपि वा ॥ ३७८ ॥ लड्डुका वर्तुलाकाराः प्रियालतिलखाखसैः। रचिताः शर्करापक्वास्तत्प्रियो लड्डुकप्रियः ॥ ३७९ ॥ लानप्रियो गजावासशालायां प्रीतिसंयुतः। विलासार्हपरं धाम यस्य लास्यपरो हि सः ॥३८०॥ ये लाभकारिणो लोकाः शीघ्रभक्तवरप्रदाः। तेषु श्रेष्ठतया ख्यातो लाभकृल्लोकविश्रुतः ॥ ३८१ ॥

वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः ॥
विकर्ता विश्वतश्चक्षुर्विधाता विश्वतोमुखः ११०

वरेण्याख्यो गणपतेरद्वैतभजने रतः। कश्चिद्राजा तदद्वैताद्वरेण्योऽस्युत्तमोऽपि वा ॥ ३८२ ॥ यद्यद्भवन्तमुद्दिश्य समिद्धेऽग्नौ हुतं हविः। तेनैव तृप्यसीत्यर्थात्त्वं वह्निवदनो मतः ॥३८३॥ वन्द्यो नम्योऽस्युपनिषद्गम्यो वेदान्तगोचरः। विकर्ता त्वं हि षड्भावविकाराणां प्रवर्तकः ॥ ३८४ ॥ यत्र क्वचन भक्तेन पत्रं पुष्पं फलं जलम्। दत्तं तत्रैव तत्पश्यन्

टिप्प०–१ 'अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' ( मुण्ड. २।२।४ ) इति श्रुतिः।

धारयन् भक्षयन्नपि ॥ ३८५ ॥ कीर्त्यसे विश्वतश्चक्षुर्विधाता विश्वतोमुखः ।

**वामदेवो विश्वनेता वज्रिवज्रनिवारणः ॥**
**विश्वबन्धनविष्कम्भाधारो विश्वेश्वरप्रभुः १११**

वामदेवो वल्गुतरं दीव्यसि[1] द्योतसे यतः ॥ ३८६ ॥ विश्वनेतासि जगतो विष्णोर्वा नायके यतः । इन्द्रवज्रस्तंभनेन वज्रिवज्रनिवारणः ॥३८७॥ विश्वनिर्माणपर्याप्तो[2] देशो विष्कंभ उच्यते । विश्वबन्धनविष्कंभाधारस्तस्यापि धारणात् ॥ ३८८ ॥ ब्रह्माण्डानां तदीशानां चेशो विश्वेश्वरप्रभुः ।

**शब्दब्रह्म शमप्राप्यः शंभुभक्तिगणेश्वरः ॥**
**शास्ता शिखाग्रनिलयः शरण्यः शिखरीश्वरः ११२**

शब्दब्रह्म परां वाचमतीतो नादरूपधृक् ॥३८९॥ शमप्राप्यः शान्तिदान्ती जित[3]चित्तेन लभ्यसे । शैवान् शाक्तान् गणांश्चेष्टे शंभुशक्तिगणेश्वरः ॥ ३९० ॥ शंभुशक्तिरिति प्राचां भिन्ननामत्वेन पाठः, शकारप्राये गणेश्वरपदस्यासंगतत्वादयुक्तः ॥ ३९१ ॥ शास्ता केरलदेशीया देवताऽस्ति तदात्मकः । तस्याः शिखायामध्येयः परमात्मा व्यवस्थितः ॥ ३९२ ॥ श्रुतिसिद्धोऽस्ति तद्रूपः शिखाग्रनिलयो भवान् । त्राता शरण्यः प्रालेयाचलात्मा शिखरीश्वरः ॥ ३९३ ॥

**षड्ऋतुकुसुमस्रग्वी षडाधारः षडक्षरः ॥**
**संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम् ॥ ११३ ॥**

---

पाठा०–1 दीव्यसे द्योतसंयुतः. 2 पर्याप्तोद्देशो. 3 निज.

जातीचम्पककुन्दादीन्येकैकर्तुभवान्यपि । षड्ऋतुकुसुमस्रग्वी सर्वदा युगपद्दधत् ॥ ३९४ ॥ मूलाधारे गणेशोऽस्ति चक्रषट्कं तदूर्ध्वतः । षण्णामाधारभूतोऽयं षडाधार इति स्मृतः ॥३९५॥ ङेवर्मयुग्वक्रतुण्डमन्त्ररूपः षडक्षरः । प्राचा त्वेतन्नामद्वयमन्यथा व्याख्यातम् ,–तद्गणेशतन्त्रतत्पुराणयोरदर्शनादित्युपेक्ष्यम् । संसारवैद्य इत्युक्तो भवरोगविनाशकः ॥३९६॥ सर्वज्ञः सकलज्ञाता सुगतात्मा विनायकः । सर्वेषामपि रोगाणां दिव्यं पीयूषमौषधम् ॥ ३९७ ॥ तस्यापि नाशयन् दोषान् सर्वभेषजभेषजम् ॥

**सृष्टिस्थितिलयक्रीडः सुरकुञ्जरभेदनः ॥**
**सिन्दूरितमहाकुम्भः सदसद्व्यक्तिदायकः ११४**

लीलया सर्वजगतां निर्मिति-स्थिति-संहृतीः ॥ ३९८ ॥ सृष्टि-स्थिति-लयक्रीडः कथ्यसे रचयन् क्षणात् । दानवैरर्चितश्च त्वं सुरकुञ्जरभेदनः ॥ ३९९ ॥ सिन्दूरितमहाकुंभः सिन्दूरारुणमस्तकः । सद्ब्रह्मैव न सद्विश्वं तयोर्व्यक्तिः प्रकाशनम् ॥४००॥ स्वभक्तेभ्यो ददासीति सदसद्व्यक्तिदायकः । साक्षी पश्यसि साक्षात्त्वं विश्वं चित्तानपेक्षया ॥ ४०१ ॥

**साक्षी समुद्रमथनः स्वसंवेद्य[1]ः स्वदक्षिणः ॥**
**स्वतन्त्रः सत्यसङ्कल्पः सामगानरतः सुखी ११५**

समुद्रमथने देवैर्मन्थनारंभणेऽर्चितः । स्वसंवेद्य[1]ः स्वयंज्योतिः स्वयंशक्तः स्वदक्षिणः ॥४०२॥ स्वतन्त्रः स्वयमेवासि

---

पाठा०–1 स्वयंवेद्यः.

नानातन्त्रात्मना यतः । अमोघकल्पनात् सत्यसंकल्प इति गीयसे ॥४०३॥ सामप्रीतेः सदानंदात् सामगानरतः सुखी ।

**हंसो हस्तिपिशाचीशो हवनं हव्यकव्यभुक् ॥**
**हव्यो हुतप्रियो हर्षो हृल्लेखामन्त्रमध्यगः ॥११६॥**

हंसो यतिविशेषात्मा यद्वा भास्करमूर्तिकः ॥ ४०४ ॥ एतत्पञ्चाक्षरस्यान्ते लिखेच्छब्दाद्विठो मनुः । तत्प्रतीकमुपादाय तस्येशो देवतोदिता ॥ ४०५ ॥ सोऽयं हस्तिपिशाचीशो नवार्णमनुदेवता । प्राचा तु—हस्तीति दीर्घांतं पठित्वा नामद्वयत्वेन व्याख्यातं, तद्गणपतिमंत्रविशेषाणां मंत्रमहोदध्यादिषूद्धृताना-मज्ञानादेव । हकारप्राये 'पिशाचीश'पदस्य नामान्तरत्वकथनं तु स्वस्यैव तादृशनामापादकं चेत्युपेक्ष्यम् । यागः प्रक्षेपयुग्होमस्तद्रूपो हवनं भवान् ॥४०६॥ देवताः पितरश्चेति द्विरूपो हव्यकव्यभुक् । हव्यो हविःस्वरूपत्वाद्धविर्ब्रह्मेति हि स्मृतेः ॥ ४०७ ॥ हुतं द्रव्यं प्रियं यस्या देवतायाः सवैभवान् । हविर्भक्षणजो मोदो हर्षः सोऽपि त्वदात्मकः ॥ ४०८ ॥ हृल्लेखार्थस्तन्त्रराजे वर्णितोव्याकुलाक्षरैः । व्योम्ना प्रकाशमानस्त्वं ग्रसमानस्त्वमग्निना ॥ ४०९ ॥ तयोर्विमर्श ईकारो बिन्दुना तन्निफालनम् । इति ह्रींकारवाच्योऽसि हृल्लेखामन्त्र-मध्यगः ॥ ४१० ॥

**क्षेत्राधिपः क्षमाभर्ता क्षमापरपरायणः ॥**
**क्षिप्रक्षेमकरः क्षेमानन्दः क्षोणीसुरद्रुमः ॥११७॥**

प्रयागादेः शरीरादेर्वेशः क्षेत्राधिपो मतः । क्षमाभर्ता

क्षितिं क्षान्तिमपि वा यो बिभर्ति सः ॥ ४११ ॥ क्षान्तिशील-मुनिप्राप्यः क्षमापरपरायणः । शीघ्रं सिद्धिं ददासीति क्षिप्रक्षेमकरो भवान् ॥ ४१२ ॥ क्षेमं सांसारिकं सौख्य-मानन्दः पारमार्थिकः । उभयात्मा त्वमेवेति[1] क्षेमानन्द इतीर्यसे ॥ ४१३ ॥ कल्पवृक्ष इव क्षोण्यामिष्टान्[2]सर्वान्प्रयच्छसि । धर्मादिदुःखभोगान्तानतः क्षोणीसुरद्रुमः ॥ ४१४ ॥

**धर्मप्रदोऽर्थदः कामदाता सौभाग्यवर्धनः ॥**
**विद्याप्रदो विभवदो भुक्तिमुक्तिफलप्रदः ॥११८॥**

कल्पद्रुमत्वं विविनक्त्येकविंशतिनामभिः । धर्मप्रदोऽर्थदः कामदातेत्युक्तस्त्रिवर्गदः ॥४१५॥ स्त्रीणां जीवत्पतित्वादि ददत्सौभाग्यवर्धनः । विद्याप्रदो विभवदो ज्ञानसंपत्तिदायकः ॥४१६॥ भोगजीवन्मुक्तिदानाद्भुक्तिमुक्तिफलप्रदः ।

**अभिरूप्यकरो वीरश्रीप्रदो विजयप्रदः ॥**
**सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः ॥ ११९ ॥**

आढ्यैः सह दरिद्राणां मूर्खाणां पण्डितैः सह । साम्यं प्रदर्शयन् सभ्येष्वाभिरूप्यकरो मतः ॥ ४१७ ॥ समरे कान्दिशीकानां अपि वीरश्रियं ददत् । नामस्मृतवतां वीरश्रीप्रदः कीर्त्यसे बुधैः ॥ ४१८ ॥ प्राचा तु वीर इति भिन्नं नाम व्याख्यातम् ,–तद्भक्तेष्टदानवर्णनपरनामसमूहमध्ये दातृगतगुणान्तरकथनपरनाम्नः संदर्भशुद्ध्यभावादुपेक्ष्यम् । वीरश्रियं जयफलां ददानो विजयप्रदः । सर्वं भक्तवशे कुर्वन्

---

पाठा०–1 त्वमेवसि. 2 मिष्टानर्थान्.

सर्ववश्यकरो भवान् ॥ ४१९ ॥ बीजदोषान् स्रावपातौ नाशयन् गर्भदोषहा । पुत्रः सूनुश्च दुहितातत्पौत्रान् दुहितुः सुतान् ॥ ४२० ॥ नप्तॄन्प्रणप्तॄन् दौहित्रान् ददानः पुत्रपौत्रदः ।

**मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः ॥**
**प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥१२०॥**

धीर्धारणावती मेधा मेधादस्तत्प्रदायकः ॥ ४२१ ॥ लोके या सद्गुणख्यातिस्तत्प्रदानेन कीर्तिदः । शोकहारी ज्ञानदानात्तरति शोकमात्मवत् ॥ ४२२ ॥ दुर्भगत्वापहारेण स्त्रीणां दौर्भाग्यनाशनः । वाचं स्तभ्नासि दुष्टानां प्रतिकूलं प्रजल्पताम् ॥४२३॥ प्रतिवादिमुखस्तम्भः कथ्यसे स्मृतिमात्रतः । सेवकेषु क्रोधजुषां राज्ञां चित्तानि शोधयेत् ॥ ४२४ ॥ स्नेहशालीनि कुर्वाणो रुष्टचित्तप्रसादनः ।

**पराभिचारशमनो दुःखभञ्जनकारकः ॥**
**लवस्त्रुटिः कला काष्ठा निमेषस्तत्परः क्षणः १२१**

पराभिचारशमनो मारणाख्यस्य कर्मणः ॥ ४२५ ॥ स्वशत्रुभिः प्रणीतस्य निष्फलीकरणान्मतः । भञ्जयन् सर्वदुःखानि दुःखभञ्जनकारकः ॥ ४२६ ॥ अथ कालस्वरूपत्वमुक्तं विंशतिनामभिः । पद्मपत्रसहस्रस्य सूक्ष्मसूच्याभिवेधने ॥४२७॥ दले दले लवः कालसहस्रेण लवैस्त्रुटिः ॥४२८॥ त्रुटेः शतं तत्परस्तैर्निमेषस्त्रिंशता भवेत् । अष्टादशनिमेषैः स्यात्काष्ठा तात्रिंशता कला ॥ ४२९ ॥

घटी मुहूर्तं प्रहरो दिवानक्तमहर्निशम् ॥
पक्षो मासोऽयनं वर्षं युगं कल्पो महालयः १२२

तत्रिंशता क्षणास्ते षड् घटी ताभ्यां मुहूर्तकम् । प्रहरस्तच्चतुष्कं तच्चतुष्कं नक्तकं दिवा ॥ ४३० ॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ।
गणेशनामसाहस्रे समाप्तं सप्तमं शतम् ॥ ७०० ॥

---

अहर्निशं त्वहोरात्रः प्रहरैरष्टभिर्भवेत् । ते पञ्चदश पक्षस्तौ मासः षडयनं तु ते ॥ ४३१ ॥ ताभ्यां तु मानुषं वर्षं तैः षष्ट्या त्रिशतीयुजा । दिव्यं द्वादशसाहस्रैर्दिव्यवर्षैश्चतुर्युगम् ॥ ४३२ ॥ चतुर्युगसहस्रेण कल्पो दैनन्दिनो लयः । द्वासप्ततिसहस्रैस्तैः स्यान्महाप्रलयो विधेः ॥ ४३३ ॥

राशिस्तारा तिथिर्योगो वारः करणमंशकम् ॥
लग्नं होरा कालचक्रं मेरुः सप्तर्षयो ध्रुवः ॥१२३॥

राशिर्द्वादश मेषाद्याः कृत्तिकाद्याश्च तारकाः । त्वमेव च तिथिश्चान्द्री[1] कला पञ्चदशात्मिका ॥ ४३४ ॥ विष्कम्भप्रथमा योगास्त्वद्रूपाः सप्तविंशतिः । योगा अमृतसिद्ध्याद्या आनंदाद्यास्त्वमेव च ॥ ४३५ ॥ रव्यादिसप्तवारात्मा बवादिकरणात्मकः । चत्वारि प्रतिनक्षत्रमंशकानि त्वमेव हि ॥ ४३६ ॥ राशीनामुदयो लग्नं होरा लग्नार्धसंमिता ।

---

पाठा०–1 श्चान्तकला.

कालचक्रं शैशुमारं मेरुः सौवर्णपर्वतः ॥ ४३७ ॥ सप्तर्षयः कश्यपाद्या औत्तानचरणिर्ध्रुवः ।

राहुर्मन्दः कविर्जीवो बुधो भौमः शशी रविः ॥
कालः सृष्टिः स्थितिर्विश्वं स्थावरं जङ्गमं च यत् १२४

राह्वादयो ग्रहा अष्टौ त्वद्रूपा एव नेतरे ॥ ४३८ ॥ कलनात् काल इत्युक्तो जगत्संहरणक्रिया । सृष्टिः स्थितिश्च जगदुत्पादनप्राणनक्रिये ॥ ४३९ ॥ यत्स्थावरादि विश्वं तत्त्वमित्येकाभिधानकम् ।

भूरापोऽग्निर्मरुद्व्योमाहङ्कृतिः प्रकृतिः पुमान् ॥
ब्रह्मा विष्णुः शिवो रुद्र ईशः शक्तिः सदाशिवः १२५

भूरापोऽग्निर्मरुद्व्योमपञ्चभूतात्मको भवान् ॥ ४४० ॥ अहङ्कृतिरहङ्कारः प्रकृतिर्मूलकारणम् । पुमांश्च पञ्चविंशस्त्वं प्रकृत्याद्यैरसंहतः ॥४४१॥ मन्त्रस्थब्रह्मविष्ण्वीशरुद्राः पादाः सदाशिवः । फलकस्तत्र कामेशः शिवस्तस्यांकगामिनी ॥ ४४२ ॥ शक्तिः कामेश्वरीत्येते सप्तापि भवदात्मकाः ।

त्रिदशाः पितरः सिद्धा यक्षा रक्षांसि किन्नराः ॥
साध्या विद्याधरा भूता मनुष्याः पशवः खगाः १२६

त्रिदशादिकशैलान्ता अर्थास्त्वं तिथिभिर्मिताः ॥४४३॥ भवान् भूतमतीतं च भव्यं क्षेमं च भावि च । भवोद्भवः शिवोत्पन्नः संसारप्रभवोऽथवा ॥ ४४४ ॥

समुद्राः सरितः शैला भूतं भव्यं भवोद्भवः ॥
साङ्ख्यं पातञ्जलं योगः पुराणानि श्रुतिः स्मृतिः ॥

अथ सांख्यादयो विद्यास्त्वद्रूपाः सप्तविंशतिः । साङ्ख्यं कपिलमुन्युक्तं शास्त्रं पातञ्जलं पुनः ॥ ४४५ ॥ सामसूत्रनिदानाख्यं योगः फणिपतीरितः । ब्राह्मादीनि पुराणानि श्रुतयो बह्वृचादयः ॥ ४४६ ॥ मन्वाद्याः श्रुतयो वेदाङ्गानि कल्पादिकानि षट् ।

वेदाङ्गानि सदाचारो मीमांसान्यायविस्तरः ॥
आयुर्वेदो धनुर्वेदो गान्धर्वं काव्यनाटकम् १२८
वैखानसं भागवतं सात्वतं पाञ्चरात्रकम् ॥
शैवं पाशुपतं कालामुखं भैरवशासनम् ॥१२९॥

सदाचारः सदाचारसङ्ग्रहात्माधुना ततः ॥४४७॥ मीमांसा षोडशाध्यायी संकर्षसहिता सती । त्रिचतुर्लक्षणे भक्तिब्रह्ममीमांसके अपि ॥४४८॥ कणादगौतममुनिप्रणीतो न्यायविस्तरः । ऋग्यजुःसामवेदानामुपवेदा अपि क्रमात् ॥४४९॥ आयुर्वेदधनुर्वेदगांधर्वास्तन्मयो भवान् । काव्यनाटकशब्दाभ्यां श्रव्यं दृश्यं च गृह्यते ॥४५०॥ श्रव्यमष्टविधं दृश्यं अष्टाविंशतिधा च यत् । संकीर्णं यच्च बहुधा तत्तत्सर्वात्मको भवान् ॥ ४५१ ॥ विष्णोर्वैखानसादीनि शैवानि तु महेशितुः ॥ पृथक् चत्वारि चत्वारि तन्त्राण्येतत्त्वदात्मकम् ॥ ४५२ ॥

**शाक्तं वैनायकं सौरं जैनमार्हतसंहिता ॥**
**सदसद्व्यक्तमव्यक्तं सचेतनमचेतनम् ॥ १३० ॥**

शाक्तादित्रितयं शक्तेर्गणेशस्य विवस्वतः । तन्त्रे द्वे नास्तिकोन्नीते अपि जैनार्हते तथा ॥४५३॥ कार्याणां करणस्थान्तरवस्थानं सदात्मता । [1]अकारणेनावस्थानं तदभावेऽसदात्मता ॥४५४॥ सर्वकार्यात्मना व्यक्तमव्यक्तं कारणात्मना । सचेतनं प्राणिमात्रं व्योमादिकमचेतनम् ॥ ४५५ ॥

**बन्धो मोक्षः सुखं भोगोऽयोगः सत्यमणुर्महान् ॥**
**स्वस्ति हुं फट् स्वधा स्वाहा श्रौषड्वौषड्वषण्णमः १३१**

बन्ध आत्मन्यनात्मत्वभ्रमो नात्मनि चात्मता । एतत्सर्वं भवानेव भगवन् परिकीर्तितः ॥ ४५६ ॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ।
गणेशनामसाहस्रखद्योते शतमष्टमम् ॥ (८००) ॥

---

मोक्षस्त्वविद्याविध्वंसस्ततो यदवशिष्यते । तत्सुखं प्रत्यगानन्दो भोगः [2]सोऽनुभवात्मकः ॥ ४५७ ॥ अयोगः संगरहितः तद्धि सत्यमबाधितम् । स एवाणुर्मनःषष्ठेन्द्रियागोचरतावशात् ॥ ४५८ ॥ ततोऽधिकस्य सौख्यस्याभावादेव स वै महान् । तदेव सम्यगस्तीति स्वस्ति नास्ति ततः परम् ॥ ४५९ ॥ अन्यस्य दूरीकरणात्तदेव ब्रह्म हुं मतम् । दूरोत्सारणमात्रं न किंतु नाशोऽपि तेन फट् ॥ ४६० ॥ स्वधेति पितृदैवत्यं स्वाहेत्यग्न्यादिदैवतम् । श्रौषडित्यादयस्तत्तच्छन्द-

---

पाठा०—1 अकारणेऽनवस्थानं. 2 सानुभवात्मकः.

युक्कर्मलक्षकाः ॥ ४६१ ॥ सर्वेषां कर्मणामिष्टसिद्ध्यर्थत्वान्महा[1]-फले। सुखे लब्धे तु तत्रैव तत्सर्वं पर्यवस्यति ॥ ४६२ ॥ तेन कर्मापि सकलं भवेदेकात्मकं सुखम्।

**ज्ञानं विज्ञानमानन्दो बोधः संविच्छमो यमः ॥**
**एक एकाक्षराधार एकाक्षरपरायणः ॥ १३२ ॥**

मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं तद्द्वयं भवान् ॥ ४६३ ॥ त्वमेव प्रत्यगानन्दः प्रत्यग्बोधस्त्वमेव हि। योगिभिः सेव्यते संविद्बाह्यवृत्तिनिरासिका ॥ ४६४ ॥ तदेकप्रवणत्वाय सौषधी भवदात्मिका। सर्वस्य शमनात्सर्वोपरमात्त्वं[2] शमो यमः ॥ ४६५ ॥ एक एवाद्वितीयस्त्वं भेदत्रैविध्यशून्यतः। गंबीजान्तस्थितेरेकाक्षराधार इति स्मृतः ॥ ४६६ ॥ ॐमित्येकाक्षरस्थत्वादेकाक्षरपरायणः।

**एकाग्रधीरेकवीर एकानेकस्वरूपधृक् ॥**
**द्विरूपो द्विभुजो द्व्यक्षो द्विरदो द्वीपरक्षकः १३३**

एकाग्रधीः स्वात्ममात्रप्रवणापि मतिर्भवान् ॥ ४६७ ॥ अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः। पराक्रमपरोऽस्येकवीरस्त्वत्तो न चापरः ॥ ४६८ ॥ प्रतिभूतमवस्थानादेकानेकस्वरूपधृक्। एकधा बहुधा चैव दृश्यसे[3] जलचन्द्रवत् ॥ ४६९ ॥ द्वे[1] ब्रह्मणी इति श्रुत्या द्विरूपोऽस्यपरं परम्।

---

पाठा०–1 महाफलं. 2 सर्वोपरमस्त्वं. 3 दृश्यते.

टिप्प०–१ 'द्वे ब्रह्मणी वेदितव्ये' (त्रि. ता. ४।१७) इति श्रुतिः।

त्वमेव द्विभुजो द्व्यक्षो द्विरदः प्रकटार्थकः ॥ ४७० ॥ सप्त-द्वीपाधिपत्यस्य प्रदानाद्वीपरक्षकः ।

**द्वैमातुरो द्विवदनो द्वन्द्वातीतो द्वयातिगः ॥**
**त्रिधामा त्रिकरस्त्रेतात्रिवर्गफलदायकः ॥१३४॥**

द्वैमातुरोऽस्युमागङ्गे मातरौ तव विश्रुते[1] ॥ ४७१ ॥ तवैव मूर्तिरन्याख्या तेन द्विवदनो भवान् । शीतोष्णादीन्यति-क्रान्तो द्वन्द्वातीत इति श्रुतः ॥ ४७२ ॥ रजस्तमश्चा-तिलङ्घ्य वर्तमानो द्वयातिगः । त्रिधामा सूर्यचन्द्राग्नितेज-स्त्रितयमूर्तिमान् ॥ ४७३ ॥ त्रयाणामपि लोकानां करणात्त्रि-करो भवान् । नयंाद्यग्नित्रयाकाङ्क्षधर्मकामार्थकर्मणाम् ॥४७४॥ फलप्रद इति त्रेतात्रिवर्गफलदायकः ।

**त्रिगुणात्मा त्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः ॥**
**चतुर्बाहुश्चतुर्दन्तश्चतुरात्मा चतुर्मुखः ॥१३५॥**

गुणत्रयवती मूलप्रकृतिस्त्रिगुणात्मता ॥ ४७५ ॥ तस्या धृतिस्त्वमेवेति त्रिगुणात्मेति गीयसे । त्रयाणामपि लोकानां त्रिलोकादिश्च कारणम् ॥ ४७६ ॥ रमालज्जानङ्गयोगस्त्रि-शक्तिः कथ्यते मनुः । [2]प्राभावौत्साहमान्त्र्या वा त्रिशक्ती-शस्तदीश्वरः ॥ ४७७ ॥ त्रिलोचनश्चतुर्बाहुश्चतुर्दन्त इति स्फुटम् । आत्मान्तरात्मा ज्ञानात्मा परमात्मेति भेदतः ॥४७८॥

---

पाठा०–1 विश्रुतौ. 2 प्राभावौत्सुक्य.

आत्मोपनिषदि प्रोक्तश्चतुरात्मा त्वमेव हि। चतुर्विधा मुखे वेदा यस्य स त्वं चतुर्मुखः ॥ ४७९ ॥

**चतुर्विधोपायमयश्चतुर्वर्णाश्रमाश्रयः ॥**
**चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकः ॥ १३६ ॥**

भेदो दण्डः साम दानमित्युपायचतुष्टयम्। चतुर्विधोपायमयस्तज्जन्यफलसाधकः ॥ ४८० ॥ ब्राह्मणब्रह्मचर्यादिवर्णाश्रमविभागशः। विहितैः कर्मभिः प्राप्यश्चतुर्वर्णाश्रमाश्रयः ॥४८१॥ गुहायां वर्तयंस्तिस्रः पश्यंति मध्यमा परा। वैखरी परितो बाह्यवर्तनेन प्रवर्तयन् ॥ ४८२ ॥ चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकः।

**चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसंभवः ॥**
**पञ्चाक्षरात्मा पञ्चात्मा पञ्चास्यः पञ्चकृत्यकृत् १३७**

चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसंभवः। इति नाम द्वयं स्पष्टं स्याद्गणेशपुराणतः ॥ ४८३ ॥ नादबिन्दुमकारोकाराकाराः प्रणवस्थिताः ॥४८४॥ त्वच्छरीरमतः पञ्चाक्षरात्मा परिकीर्त्यसे। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥४८५॥ यस्यैते विग्रहाः पञ्च स पञ्चात्मेति गीयसे। विस्तीर्णं वदनं यस्य ब्रह्माण्डकवलक्षमम् ॥ ४८६ ॥ पचेर्विस्तारवाचित्वात्स पञ्चास्य इति स्मृतः। सृष्टिः स्थितिश्च संहारस्तिरोधानमनुग्रहः ॥ ४८७ ॥ ब्रह्मादिरूपैरेतानि कुर्वाणः पञ्चकृत्यकृत्।

---

पाठा०–1 परिगीयसे.

**पञ्चाधारः पञ्चवर्णः पञ्चाक्षरपरायणः ॥**
**पञ्चतालः पञ्चकरः पञ्चप्रणवभावितः ॥१३८॥**

पञ्चाधारोऽसि भूतानां पञ्चानामपि धारकः ॥ ४८८ ॥ सर्वदा सूर्यकोटिप्रभः सन् कृतत्रेतयोश्चन्द्रवर्णोऽर्जुनद्रुच्छविः । द्वापरे शक्रगोपोपमोऽभूत्कलौ धूम्रवर्णोऽभवत्पञ्चवर्णो भवान् ॥ ४८९ ॥ जपन् पञ्चाक्षरं शैवं पञ्चाक्षरपरायणः । आमध्यमाग्रादङ्गुष्ठात्प्रमाणं ताल उच्यते ॥ ४९० ॥ तालपञ्चकदेहाढ्यः पञ्चतालोऽसि वामनः । पञ्चहस्तमितः प्रांशुरपि पञ्चकरो भवान् ॥ ४९१ ॥ तारवाग्भवलज्जाभाः प्रसादपरया सह । प्रणवाः पञ्च तैर्वाच्यः पञ्चप्रणवभावितः ॥ ४९२ ॥

**पञ्चब्रह्ममयस्फूर्तिः पञ्चावरणवारितः ॥**
**पञ्चभक्ष्यप्रियः पञ्चबाणः पञ्चशिवात्मकः ॥१३९॥**

सद्योजातवामदेवाघोरतत्पुरुषेश्वरैः । पञ्चब्रह्ममयस्फूर्तिरभिन्नस्फुरणात्मकः ॥ ४९३ ॥ पञ्चावृतिस्तवप्रोक्तैरङ्गाद्यावरणैर्वृतः । छन्नो वा पञ्चभिः कोशैः पञ्चावरणवारितः ॥४९४॥ लड्डूकमंडकपूरीफेणीवटकाभिधानि भक्ष्याणि । यस्य प्रियाणि पञ्चापि पञ्चभक्ष्यप्रियः स भवान् ॥ ४९५ ॥ बाणैश्वर्यभिधाम्बायाः कामेश्वरशिवस्य च । प्रत्येकं पञ्चबीजानि सिद्धान्येव तु तद्विदाम् ॥ ४९६ ॥ तदात्मकतया पञ्चबाणः पञ्चशिवात्मकः ।

---

पाठा०—1 गोपोपमानः. 2 आमध्यमाग्राद्यङ्गुष्ठात्. 3 देहो यः. 4 लज्जायाः. 5 पञ्चावृत्तिस्तवे. 6 प्रसिद्धानि च.

षट्कोणपीठः षट्चक्रधामा षड्ग्रन्थिभेदकः ॥
षडध्वध्वान्तविध्वंसी षडङ्गुलमहाह्रदः ॥ १४० ॥

षट्कोणपीठः कोणाः षट् पूजास्थानानि[1] यस्य सः ॥४९७॥ षट्चक्रधामा त्वं मूलाधिष्ठानमणिपूरकाः । अनाहतविशुद्ध्याज्ञावासस्थानानि यस्य सः ॥ ४९८ ॥ मूलाज्ञामणिपूरेषु द्वौ द्वौ ग्रंथी भिनत्ति यः । वह्निकुंडलिनी सैव भवान् षड्ग्रंथिभेदकः ॥४९९॥ पदभुवनवर्णतत्त्वकलामंत्राख्याः षडध्वानः । तच्छोधनकर्तृत्वेन[2] षडंध्वध्वांतविध्वंसी ॥ ५०० ॥ महाह्रदो नाभिरूपो गांभीर्येण षडङ्गुलः । पिचण्डिलत्वाद्यस्यैष षडङ्गुलमहाह्रदः ॥ ५०१ ॥

षण्मुखः षण्मुखभ्राता षट्शक्तिपरिवारितः ॥
षड्वैरिवर्गविध्वंसी षडूर्मिभयभञ्जनः ॥ १४१ ॥

षट्संख्याकानि शास्त्राणि मुखे यस्य स षण्मुखः । स भवान् षण्मुखभ्राता सेनानीर्यस्य तेऽनुजः ॥५०२॥ षडङ्गयुवतिच्छन्नः षट्शक्तिपरिवारितः । षड्वैरिवर्गविध्वंसी कामक्रोधौ च मत्सरम् ॥ ५०३ ॥ लोभमोहमदान् हंसि षडिमान्वैरिशब्दितान् । अशनायां पिपासां च शोकं मोहं जरां मृतिम् ॥५०४॥ षडूर्मिशब्दितान्निघ्नन् षडूर्मिभयभञ्जनः ।

षट्तर्कदूरः षट्कर्मनिरतः षड्साश्रयः ॥
सप्तपातालचरणः सप्तद्वीपोरुमण्डलः ॥ १४२ ॥

---

पाठा०–1 पूज्यस्थानानि. 2 कर्तृत्वे.

षड्दर्शनोदितैस्तर्कैर्युक्तिभिर्यो न गृह्यते ॥ ५०५ ॥ वागतीतः स षट्तर्कदूर इत्यभिधीयते । षट्कर्मनिरतः सक्तः षट्सु यागादिकर्मसु ॥ ५०६ ॥ मधुरादिरसानामप्याधारः षड्रसाश्रयः । अतलाद्या अधोऽधःस्थाः सप्त लोका यदंघ्रिगाः ॥ ५०७ ॥ सप्तजम्ब्वादयो द्वीपा यस्य सक्थिभुवर्मुखाः । ऊर्ध्वगाः सप्तगोलोकावधयो यस्य मूर्ध्नि सः ॥ ५०८ ॥ सप्तपातालचरणः सप्तद्वीपोरुमंडलः ।

**सप्तस्वर्लोकमुकुटः सप्तसप्तिवरप्रदः ॥**
**सप्ताङ्गराज्यसुखदः सप्तर्षिगणमण्डितः ॥१४३॥**

सप्तस्वर्लोकमुकुट इति नामत्रयेरितः ॥ ५०९ ॥ ताभिर्जटाभिः सहितः सप्त इत्युच्यते शिवः । मणिमल्लमृधे[1] तस्मै भवान् प्रादाद्धयोत्तमम् ॥५१०॥ सूर्याय वा वरं तेन सप्तसप्तिवरप्रदः । स्वाम्यमात्यादिसप्ताङ्गयुगराज्यात् सुखं ददत् ॥५११॥ सप्ताङ्गराज्यसुखदः सप्तभिः कश्यपादिभिः । गणदेवैश्च सेव्यत्वात् सप्तर्षिगणमंडितः ॥ ५१२ ॥

**सप्तच्छन्दोनिधिः सप्तहोता सप्तस्वराश्रयः ॥**
**सप्ताब्धिकेलिकासारः सप्तमातृनिषेवितः १४४**

सप्तछन्दोनिधिः पथ्य[1]छन्दःसप्तकसंश्रयः । होत्रादयो स्थावाकांता होतारः सप्त सौमिकाः ॥५१३॥ [2]महाविहर्मुनिर्वापि

टिप्प०–१ अत्र गायत्र्यादिजगत्यन्तानि 'पथ्य'शब्देनोच्यन्ते. २ हविर्होतेत्यारभ्य यास्य उद्गातेत्यन्तेन सप्त होतेत्युच्यन्ते ।

पाठा०–1 मल्लवधे. 2 मनुर्वापि.

सप्तहोता तदात्मकः । षड्जादिस्वरवान्नाद इति सप्तस्वराश्रयः ॥५१४॥ सप्ताब्धिकेलिकासारो यस्य क्रीडासरोऽर्णवः । ब्राह्म्यादिमातृसेव्यत्वात् सप्तमातृनिषेवितः ॥ ५१५ ॥

**सप्तच्छन्दोमोदमदः सप्तच्छन्दोमखप्रभुः ॥**
**अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणम् ॥ १४५ ॥**

पथ्यानि सप्तच्छन्दांसि तेषां मोदेन यो मदः । तेनैव घूर्णनात् सप्तच्छन्दोमोदमदः स्मृतः ॥५१६॥ पथ्याद्यक्रतुपूज्य[1]त्वात् सप्तच्छन्दोमखप्रभुः । अष्टमूर्तिशिवस्तेन यन्मूर्तिर्हृदि चिन्त्यते ॥ ५१७ ॥ सोऽष्टमूर्तिर्ध्येयमूर्तिर्ध्येयो वा पृथगष्टभिः । प्रकृत्यहङ्कृतिमहत्पञ्चतन्मात्रसंज्ञिताः ॥ ५१८ ॥ प्रकृतीर्यो जनयति सोऽष्टप्रकृतिकारणम् ।

**अष्टाङ्गयोगफलभूरष्टपत्राम्बुजासनः ॥**
**अष्टशक्तिसमृद्धश्रीरष्टैश्वर्यप्रदायकः ॥ १४६ ॥**

अष्टाङ्गयोगफलभूः समाध्यन्तैर्यमादिभिः ॥ ५१९ ॥ अङ्गैर्युक्तस्य हृद्वृत्तिरोधस्य फलदायकः । पङ्कजेऽष्टदले तिष्ठन् अष्टपत्राम्बुजासनः ॥ ५२० ॥ अष्टशक्तिसमृद्ध[2]श्रीर्दलाष्टकनिवासिना । तीव्रादिशक्त्यष्टकेन परितः सेवितो भवान् ॥ ५२१ ॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ।
गणेशनामसाहस्रखद्योते नवमं शतम् ॥ ९०० ॥

---

दाताऽणिमादिसिद्धीनामष्टैश्वर्यप्रदायकः ।

---

पाठा०–1 पथ्याद्य. 2 समृद्धि.

**अष्टपीठोपपीठश्रीरष्टमातृसमावृतः ॥**
**अष्टभैरवसेव्योऽष्टवसुवन्द्योऽष्टमूर्तिभृत् ॥ १४७ ॥**

अष्टपीठोपपीठश्रीर्महापीठोपपीठयोः ॥ ५२२ ॥ पुराणे स्फुटयोर्भूरिसङ्ख्ययोः संपदात्मकः । अष्टामी तु महालक्ष्मीर्ब्राह्म्याद्याः सप्त मातरः ॥ ५२३ ॥ [1]आवृता यस्य तिष्ठन्ति सोऽष्टमातृसमावृतः । अष्टभैरवसेव्योऽष्टौ भैरवा बटुकादयः ॥ ५२४ ॥ तैः सेव्यो वसवोऽष्टौ तु प्रभासांता धरादयः । तैर्वन्दितो भवानष्टवसुवंद्यः प्रकीर्तितः ॥ ५२५ ॥ भूतानि पुण्यवन्तौ स्वरे तद्रूपोऽष्टमूर्तिभृत् ।

**अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहविःप्रियः ॥**
**नवनागासनाध्यासीनवनिध्यनुशासिता ॥१४८॥**

अष्टचक्रा नवद्वारा देवानां पूरिति श्रुतेः ॥ ५२६ ॥ यंत्रे तिष्ठन्नष्टचक्रस्फुरन्मूर्तिरिति स्मृतः । तिलेषु सक्तुचिपिटः कदल्यो मोदकास्तिलाः ॥ ५२७ ॥ नारिकेलघृताक्तानीत्यष्टद्रव्यहविःप्रियः । नवनागासनाध्यासी नागैः कर्कोटकादिभिः ॥ ५२८ ॥ पत्रेष्वष्टसु मध्ये च यस्यासनमधिष्ठितम् । शासच्छंखमुकुंदादीन् नवनिध्यनुशासिता ॥ ५२९ ॥

**नवद्वारपुराधारो नवाधारनिकेतनः ॥**
**नवनारायणस्तुत्यो नवदुर्गानिषेवितः ॥१४९॥**

---

पाठा०–1 आवृत्तौ.

नवद्वारपुराधारो जीवरूपेण देहभृत् । कुलाकुलसहस्रारे मूलाद्याज्ञांतिमानि षट् ॥ ५३० ॥ लंबिकेति नवस्वास्से नवाधारनिकेतनः । धर्माद्यनन्तबदरीरूपशङ्करसुन्दरैः ॥५३१॥ लक्ष्म्या साध्येनोपपदैर्युक्ता नारायणा नव । नवनारायणस्तुत्यस्तैः स्तुत्यः स भवानिति ॥५३२॥ दुर्गाया नवकूष्माण्डचन्द्रघण्टादयोऽभिधाः । प्रसिद्धास्ताभिरीड्यत्वान्नवदुर्गानिषेवितः ॥ ५३३ ॥

**नवनाथमहानाथो नवनागविभूषणः ॥**
**नवरत्नविचित्राङ्गो नवशक्तिशिरोधृतः ॥१५०॥**

ज्ञानप्रकाशसत्यानन्दविमर्शस्वभावसुभगानाम् । नवनाथमहानाथो नाथत्वात्प्रतिभपूर्णयोश्च भवान् ॥ ५३४ ॥ कर्कोटकादिमण्ड्यत्वान्नवनागविभूषणः । नवरत्नविचित्राङ्गो वज्रमुक्तादिभूषितः ॥ ५३५ ॥ तीव्राद्यानवते पीठे नवशक्तिशिरोधृतः ।

**दशात्मको दशभुजो दशदिक्पतिवन्दितः ॥**
**दशाध्यायो दशप्राणो दशेन्द्रियनियामकः १५१**

दिशो दश तदात्मा यो व्यापकः स दशात्मकः ॥५३६॥ महागणपतेर्मूर्त्या भवान् दशभुजोऽभवत् । इन्द्राद्योऽष्टौ दिक्पाला ऊर्ध्वाधोदिगधीश्वरौ ॥ ५३७ ॥ क्रमाद्ब्रह्मानन्त इति दशदिक्पतिवन्दितः । दशाध्यायश्चतुर्वेदी षडङ्गाध्ययनान्मतः ॥ ५३८ ॥ दशप्राणः पंचपंचप्राणनागादिरूपवान् ॥ वागाद्यात्मत्वगाद्यात्मदशेन्द्रियनियामकः ॥५३९॥

दशाक्षरमहामन्त्रो दशाशाव्यापिविग्रहः ॥
एकादशादिभी रुद्रैः स्तुत एकादशाक्षरः १५२

उक्तो हस्तिपिशाचीति मन्त्राश्चेत्प्रणवादिमः। दशाक्षर-महामन्त्रस्त्वद्दैवत्यस्त्वमेव सः ॥ ५४० ॥ दशदिग्व्यापि-देहत्वाद्दशाशाव्यापिविग्रहः। रुद्रा एकादशारभ्य सहस्राणि सहस्रशः ॥ ५४१ ॥ एकादशादिभी रुद्रैः स्तुतस्तैः सकलैर्नुतः। तारशक्ती विघ्नशक्ती वशमानय ठद्वयम् ॥५४२॥ एकादशाक्षरो मन्त्रस्त्वद्दैवत्यस्त्वमेव सः।

द्वादशोद्दण्डदोर्दण्डो द्वादशान्तनिकेतनः ॥
त्रयोदशभिधाभिन्नविश्वेदेवाधिदैवतम् ॥१५३॥

द्वादशोद्दंडदोर्दंडो गाढैर्द्वादशभिर्भुजैः ॥५४३॥ द्वादशांतं ललाटोर्ध्वं ब्रह्मरंध्रावसानकम्। प्रकटो योगिनां तत्र द्वाद-शांतनिकेतनः ॥५४४॥ पुरूरवप्रभृतिभिः पूज्यस्त्वं विश्वदै-वतैः। त्रयोदशाभिधाभिन्नविश्वेदेवाधिदैवतम् ॥५४५॥

चतुर्दशेन्द्रवरदश्चतुर्दशमनुप्रभुः ॥
चतुर्दशादिविद्याढ्यश्चतुर्दशजगत्प्रभुः ॥१५४॥

चतुर्दशानामिन्द्राणां मनूनां वरदोऽधिपः। चतुर्दशेंद्र-वरदश्चतुर्दशमनुप्रभुः ॥ ५४६ ॥ चतुर्दशादिविद्याढ्यो वेदाद्याः सोपवेदकाः। चतुर्दशाष्ट दश च प्रसिद्धास्तासु पण्डितः ॥५४७॥ आपातालादा च सत्याच्चतुर्दशजगत्प्रभुः।

साम पंचदशः पंचदशीशीतांशुनिर्मलः ॥
षोडशाधारनिलयः षोडशस्वरमातृकः ॥१५५॥

यत्पंचदशभिः स्तोमै राज्यस्तोत्रचतुष्टयम् ॥ ५४८ ॥ सामयुक्तं तदात्मत्वात् सामपंचदशो भवान् । स्वच्छो राकेंदुवत्पंचदशीशीतांशुनिर्मलः ॥५४९॥ षोडशाधारनिलयोऽस्यंतश्चक्रेषु संस्थितः । षडाधारनवाधारषोडशाधारलक्षणम् ॥ ५५० ॥ वेद्यं गुरुमुखादेवेत्यागमे शिवशासनम् । [1]स्वरान्मिमीते मानेन षोडशस्वरमातृकः ॥ ५५१ ॥

षोडशांतपदावासः षोडशेन्दुकलात्मकः ॥
कला सप्तदशी सप्तदशः सप्तदशाक्षरः ॥१५६॥

षोडशांतपदावसो ब्रह्मरंध्राब्जकर्णिकाम् ॥ ५५२ ॥ आरभ्योर्ध्वं षोडशांतमुन्मन्याः परतः स्थितः । अमृता [2]मानिनीत्यादिषोडशेंदुकलात्मकः ॥ ५५३ ॥ कला सप्तदशी नाम प्रसिद्धा त्रिपुरागमे । त्रयोदशाक्षरी तुर्यविद्याख्या त्वं तदात्मकः ॥ ५५४ ॥ यत्तु सप्तदशस्तोमं पृष्ठस्तोत्रचतुष्टयम् । सामयुक्तं तदात्मत्वाद्भवान् सप्तदशो मतः ॥ ५५५ ॥ वौषडाश्रावययजास्तु श्रौषड्येयजामहे । इति त्वं आप्नुषे यज्ञानिति सप्तदशाक्षरः ।

अष्टादशद्वीपपतिरष्टादशपुराणकृत् ॥
अष्टादशौषधीसृष्टिरष्टादशविधिः स्मृतः १५७

---

पाठा०–1 स्वरानुमीतं मानेन. 2 मानदंत्यादि.

अष्टादशद्वीपपतिः सप्तैकादशसंख्ययोः ॥ ५५६ ॥ द्वीपोपद्वीपयोर्जंबुसिंहलाद्योरधीश्वरः। मात्स्यकौर्मब्राह्मपाद्मा-द्यष्टादशपुराणकृत् ॥ ५५७॥ अष्टादशौषधीसृष्टिर्धान्य-सृष्टिविचक्षणः। मुख्यधान्योपधान्यानि तेषु द्वादश षट् क्रमात् ॥५५८॥ विधयो पूर्वनियमपरिसंख्याः पृथक् पृथक्। प्रयोगविनियोगेत्याख्याभिर्नव ते द्विधा ॥ ५५९ ॥ गुण-प्रधानभेदादित्यष्टादश विधिः स्मृतः।

अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः ॥
एकविंशः पुमानेकविंशत्यंगुलिपल्लवः ॥१५८॥

नागरद्राविडांध्राद्याः स्वतंत्रा लिपयो भुवि ॥ ५६९ ॥ अष्टा-दश तदंशोत्था अवान्तरभिदा अपि। देशभेदेन बहवस्त-[1]ज्ज्ञाने त्वं विचक्षणः ॥ ५६१ ॥ अष्टादशलिपिव्यष्टिस-मष्टिज्ञानकोविदः। दशहस्त्या अङ्गुलयः पद्मा अंगुलयो दश ॥ ५६२ ॥ एकविंशः पुमानात्मेत्यामनंत्यैतरेयिणः। सद्वशुण्डाञ्चलेनैकविंशत्यङ्गुलिपल्लवः ॥ ५६३ ॥

चतुर्विंशतितत्त्वात्मा पञ्चविंशाख्यपूरुषः ॥
सप्तविंशतितारेशः सप्तविंशतियोगकृत् ॥१५९॥

तत्त्वानि जिनसंख्यानि तदूर्ध्वः पुरुषो भवान्। चतुर्विं-शतितत्त्वात्मा पंचविंशाख्यपूरुषः ॥ ५६४ ॥ नक्षत्राणां च योगानां ईशः कर्ता क्रमाद्भवान्। सप्तविंशतितारेशः सप्तविंशतियोगकृत् ॥ ५६५ ॥

---

पाठा०–1 तज्ज्ञोऽसि त्वं विचक्षणः.

द्वात्रिंशद्भैरवाधीशश्चतुस्त्रिंशन्महाह्रदः ॥
षट्त्रिंशतत्त्वसंभूतिरष्टात्रिंशत्कलातनुः १६०

द्वात्रिंशद्भैरवाधीशश्चत्वारो भैरवाष्टकाः। असितांगादयो ये ये तेषां तेषामधीश्वरः ॥५६६॥ पुष्कराद्या देवखाताः संति पुण्या महाह्रदाः। तदात्मकत्वेन भवांश्चतुस्त्रिंशन्महाह्रदः ॥ ५६७ ॥ षट्त्रिंशत्तत्त्वसंभूतिः शैवतंत्रोक्तया दिशा। शिवादिक्षितिपर्यंतषट्त्रिंशत्तत्त्वकारणम् ॥ ५६८ ॥ वह्नेः सूर्यस्य चन्द्रस्य दश द्वादश षोडश। कलाः सन्ति तदात्मत्वादष्टात्रिंशत्कलातनुः ॥ ५६९ ॥

नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलः ॥
पञ्चाशदक्षरश्रेणी पञ्चाशद्रुद्रविग्रहः ॥ १६१ ॥

मरुद्वर्गनतश्चासौ निष्प्रत्यूहगतिश्च सः। नमदेकोनपंचाशन्मरुद्वर्गनिरर्गलः ॥५७०॥ पंचाशदक्षरश्रेणीत्युच्यते मातृकात्मना। श्रीकंठादिशिवात्मत्वात् पंचाशद्रुद्रविग्रहः ॥ ५७१ ॥ केशवाद्याश्च कीर्त्याद्या विष्णवस्तस्य शक्तयः।

पञ्चाशद्विष्णुशक्तीशः पञ्चाशन्मातृकालयः ॥
द्विपञ्चाशद्वपुःश्रेणी त्रिषष्ट्यक्षरसंश्रयः ॥१६२॥

पञ्चाशद्विष्णुशक्तीशस्तदीशत्वेन कथ्यसे ॥ ५७२ ॥ एकपञ्चाशतोर्णानामालयो लय एव वा। नाद एव तदात्मत्वात्पञ्चाशन्मातृकालयः ॥ ५७३ ॥ लैङ्गवर्णितपाशानाम-

विद्यापञ्चपर्वणि । अष्टाष्टदिग्वसुधृतिभिन्नानां देहदायिनाम् ॥ ५७४ ॥ त्वद्रूपत्वाद्द्विपञ्चाशद्वपुःश्रेणीति गीयसे । त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मताः ॥ ५७५ ॥ कला अपि चतुःषष्टिः प्रसिद्धास्तत्समाश्रयः । तन्निर्णेता तत्खनिस्त्वं त्रिषष्ट्यक्षरसंश्रयः ।

**चतुःषष्ट्यर्णनिर्णेता चतुःषष्टिकलानिधिः ॥**
**चतुःषष्टिमहासिद्धयोगिनीवृंदवंदितः ॥१६३॥**

चतुःषष्ट्यर्णनिर्णेता चतुःषष्टिकलानिधिः । अक्षोभ्यादिचतुःषष्टिमिथुनैर्वंदितो भवान् ॥ ५७७ ॥ चतुःषष्टिमहासिद्धयोगिनीवृंदवंदितः ।

**अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनः ॥**
**चतुर्नवतिमंत्रात्मा षण्णवत्यधिकप्रभुः ॥१६४॥**

शैवतीर्थान्यष्टषष्टिः श्रीकाशीखंडपाद्मयोः ॥ ५७८ ॥ उक्तानि तेषु क्षेत्रेषु भावयन् भैरवं शिवम् । अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनः ॥५७९॥ अष्टात्रिंशत्कला मंत्राः पञ्चाशन्मातृकाः कलाः । हंसः शुचिप्रतद्विष्णुर्विष्णुर्योनि त्रियंबकम् ॥ ५८० ॥ तद्विष्णोर्मूलविद्येति चतुर्नवतिसंज्ञकाः । द्रव्यशुद्ध्यै कलासूत्रे जामदग्न्येन वर्णिताः ॥ ५८१ ॥ चतुर्नवतिमंत्रात्मा तावन्मंत्रात्मको भवान् । प्राचा तु—चतुर्गुणिता नवतिः षष्ठ्यधिकत्रिशती वर्षस्य तावद्दिनानि तदात्मक इति

---

पाठा०-1 पाद्मखण्डयोः.

व्याख्यातं,—तत् षण्णवतिसंख्याकनामतः पूर्वं तस्याः संख्याया उल्लेखे संदर्भविरुद्धम्, प्रायेण मंत्रशास्त्रसंप्रदाविरुद्धा एवार्था बहुषु नामसु तेन लिखितास्ते विस्तरभयान्नास्माभिरनूद्य दूषिताः; दिङ्मात्रं तु तत्र तत्र प्रदर्शितम्। तंत्रराजे षण्णवतिः प्रोक्ताः श्रीचक्रदेवताः ॥ ५८२ ॥ विद्यागणेशयोर्योगाज्जायंतेऽधिकदेवताः। तासामीशः समस्तानां षण्णवत्यधिकप्रभुः ॥ ५८३ ॥

**शतानन्दः शतधृतिः शतपत्रायतेक्षणः ॥**
**शतानीकः शतमखः शतधारावरायुधः १६५**

शतानन्दः शतगुणा आनन्दा मानुषादयः। ब्रह्मानन्दादिमाये ये ते सर्वेऽपि तदात्मकाः ॥ ५८४ ॥ ब्रह्मांडानामनन्तानां धर्ता शतधृतिर्भवान्। पद्मपत्रायताक्षस्त्वं शतपत्रायतेक्षणः ॥ ५८५ ॥ शतानीको भूरिसैन्यः शक्रः शतमखो भवान्। अथवा बहुसंख्यानि पूजनादीनि यस्य सः ॥ ५८६ ॥ शतं धारा अरास्तीक्ष्णा यदायुधवरस्य सः। वज्रोत्कृष्टायुधो वाऽपि शतधारावरायुधः ॥ ५८७ ॥

**सहस्रपत्रनिलयः सहस्रफणभूषणः ॥**
**सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥१६६॥**

सहस्रपत्रनिलयो ब्रह्मरंध्रस्थपद्मगः। फणासहस्रवद्भूष्यः सहस्रफणभूषणः ॥५८८॥ सहस्रशीर्षापुरुष इत्येकं नाम ते स्फुटम्। अनंतनेत्रचरणः सहस्राक्षः सहस्रपात् ॥५८९॥

**सहस्रनामसंस्तुत्यः सहस्राक्षबलापहः ॥**
**दशसाहस्रफणभृत्फणिराजकृतासनः ॥ १६७ ॥**

सहस्रनामसंस्तुत्यः स्तुत्यर्होऽसंख्यनामभिः । यमाविशन्ति नामानि सर्वाणीति किल श्रुतेः ॥ ५९० ॥ प्रसिद्धं तत्पुराणे यत् सहस्राक्षबलापहः । दशसाहस्रफणभृत्फणिराजकृतासनः ॥ ५९१ ॥ इच्छया सृष्टिनिर्मातुः किमसाध्यं तव प्रभो ।

**अष्टाशीतिसहस्राद्यमहर्षिस्तोत्रयंत्रितः ॥**
**लक्षाधीशप्रियाधारो लक्षाधारमनोमयः १६८**

सर्वविद्याकलाराशिरक्षणैकप्रयोजनः ॥ ५९२ ॥ विष्णुना हिमवत्पृष्ठे स्थापिता गृहमेधिनः । पुराणे वैष्णवे[1] प्रोक्तास्तैः स्तुत्योऽसि नियंत्रितः॥५९३॥ अष्टाशीतिसहस्राद्यमहर्षिस्तोत्रयंत्रितः । लक्षाधीशप्रियाधारो लक्षाधीशा धनेश्वराः ॥५९४॥ तेषां प्रियः सन्नाधारो धनवृद्ध्यर्थमाश्रितः । लक्षाणि चित्तस्थैर्यार्थं प्रसिद्धानि तदाश्रितं ॥ ५९५ ॥ मनो यस्य तदात्मा त्वं लक्षाधारमनोमयः ।

**चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशितः ॥**
**चतुरशीतिलक्षाणां जीवानां देहसंस्थितः १६९**

चतुर्लक्षजपप्रीतः पुरश्चर्या हि सा मनोः ॥ ५९६ ॥ पुराणाष्टादशग्रंथसंख्यालक्षचतुष्टयम् । तैः प्रकाशितरूपस्त्वं चतुर्लक्षप्रकाशितः ॥५९७॥ सर्वजीवात्मतेयत्तानवच्छेदश्च

---

पाठा०—1 वैष्णवाः.

रोचिषः। कलंकतापासंपर्कः कथ्यते नामभिस्त्रिभिः ॥ ५९८ ॥
चतुरशीतिलक्षाणां जीवानां देहसंस्थितः ।

**कोटिसूर्यप्रतीकाशः कोटिचंद्रांशुनिर्मलः ॥**
**शिवाभवाध्युष्टकोटिविनायकधुरंधरः ॥ १७० ॥**

कोटिसूर्यप्रतीकाशः कोटिचंद्रांशुनिर्मलः ॥ ५९९ ॥
ग्रहा विनायकाभिख्याः सार्धकोटित्रयात्मकाः। भवस्य च शिवायाश्च प्रत्येकं संति तत्पतिः ॥ ६०० ॥ शिवाभवाध्युष्ट-कोटिविनायकधुरंधरः ।

**सप्तकोटिमहामंत्रमंत्रितावयवद्युतिः ॥**
**त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ॥ १७१ ॥**

विश्वरूपस्य तेऽङ्गानि सर्वमंत्राधिदेवताः ॥ ६०१ ॥ अतः संजात[1]मंत्रैस्तैर्द्योतसेऽवयवैरपि । सप्तकोटिमहामंत्रमंत्रितावयवद्युतिः ॥ ६०२ ॥ ईदृशान्नाधिकस्त्वत्तः कोऽपि देवस्ततो भवान्। त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ॥ ६०३ ॥

**अनन्तनामानन्तश्रीरनन्तानन्तसौख्यदः ॥**

अनंतनामा सर्वेऽपि शब्दास्त्वन्नामतां गताः। यावत्प्रतिष्ठितं ब्रह्म तावती वागिति श्रुतेः ॥ ६०४ ॥ अनंतश्रीरसंख्यास्ते विद्यासंपत्तिकीर्तयः । प्रातिस्विकमनंतानामानन्त्ये गणना तु या ॥ ६०५ ॥ तावंतं ददद्दानन्दमनन्तानन्तसौख्यदः । अनंतानंददानं तु स्वाद्वैते पर्यवस्यति ॥ ६०६ ॥

इति भारत्युपाख्यस्य भास्कराग्निचितः कृतौ ।
गणेशनामसाहस्रखद्योते दशमं शतम् ॥ १००० ॥

---

पाठा०-1 संज्ञान्मन्त्रैः.

दशशतकादिनामानि

आदौ गणेश्वरः पश्चात्सर्वनेत्राधिवासकः । तेजोवती-शिरोरत्नं भोगदाकांतिमंडितः ॥ ६०७ ॥ उडुभृन्मौलिरथ च प्रोक्तो ढुंढिविनायकः । रसप्रियोऽहर्निशं च मोक्षोऽष्टैश्वर्य-दायकः ॥ ६०८ ॥ इमानि शतकादीनि नामानि क्रमतो दश । संख्याक्रमनिरासाय न विस्मर्याणि सूरिभिः ॥ ६०९ ॥

## अथ ग्रन्थफलश्रुतिः

इति वैनायकं नाम्नां सहस्रमिदमीरितम् ॥१७२॥
इदं ब्राह्मे मुहूर्ते यः पठति प्रत्यहं नरः ॥
करस्थं तस्य सकलमैहिकामुष्मिकं सुखम् १७३
आयुरारोग्यमैश्वर्यं धैर्यं शौर्यं बलं यशः ॥
मेधा प्रज्ञा धृतिः कांतिः सौभाग्यमतिरूपता १७४

इतीति । अनेन प्रकारेणेत्यर्थः, इदमित्यङ्गुल्या निर्देशः; पदद्वयेन सहस्रसंख्याया अन्यूनानधिकता ध्वनिता; तेनाष्टौ नामानीहाधिकृत्य पदानि च्छिन्दंतो वचनाभावान्निरस्ताः । यत्तु–अष्टसंख्याधिक्यं विनाऽस्य फलप्रदत्वं नास्तीत्युक्त्वा सोमक्रयप्रकरणस्याष्टसंख्यार्थवादं लिखंति,–तत्पामरप्रतारण-मात्रम्; विष्णुललितादिसहस्रनामसु क्वापि फलासिद्ध्यनापत्तेः, तस्मात्स्वस्य नामपदच्छेदासामर्थ्यमपह्नोतुं तद्वचनमिति दिक् ॥ १७१ ॥ अस्य स्तोत्रस्य जप ऐहिककामस्यामुष्मिककामस्य निष्कामस्य चेति त्रिविधः । तत्र प्रथममाह सार्धैः षोडशभिः आयुरित्यादिभिः ॥ प्रज्ञा ग्राहिणी बुद्धिः, मेधा धारणा-

वती बुद्धिः ॥ १७३ ॥ क्षमा परापकारप्रतीकारक्रियाभावः, क्षांतिः परकृतापकारप्रयुक्तक्रोधस्याप्यभावः ॥ १७४-१७५ ॥ ज्ञानं मोक्षजनकचरमवृत्ति, विज्ञानं शास्त्रशिल्पविषयकं शास्त्रम् ॥ १७६ ॥

सत्यं दया क्षमा शांतिर्दाक्षिण्यं धर्मशीलता[1] ॥
जगत्संयमनं विश्वसंवादो वादपाटवम्[2] ॥ १७५ ॥
सभापांडित्यमौदार्यं गांभीर्यं ब्रह्मवर्चसम् ॥
औन्नत्यं च कुलं शीलं प्रतापो वीर्यमार्यता १७६
ज्ञानं विज्ञानमास्तिक्यं स्थैर्यं विश्वातिशायिता ॥
धनधान्याभिवृद्धिश्च सकृदस्य जपाद्भवेत् १७७
वश्यं चतुर्विधं नृणां जपादस्य प्रजायते ॥
राज्ञो राजकलत्रस्य राजपुत्रस्य मंत्रिणः ॥ १७८ ॥
जप्यते यस्य वश्यार्थं स दासस्तस्य जायते ॥
धर्मार्थकाममोक्षाणामनायासेन साधनम् १७९
शाकिनीडाकिनीरक्षोयक्षोरगभयापहम् ॥
साम्राज्यसुखदं चैव समस्तरिपुमर्दनम् ॥ १८० ॥
समस्तकलहध्वंसि दग्धबीजप्ररोहणम् ॥
दुःस्वप्ननाशनं क्रुद्धस्वामिचित्तप्रसादनम् १८१

---

पाठा०-1 धर्मशालिता. 2 वेदपाटवम्.

षट्कर्माष्टमहासिद्धित्रिकालज्ञानसाधनम् ॥
परकृत्याप्रशमनं परचक्रविमर्दनम् ॥ १८२ ॥
संग्रामरंगे सर्वेषामिदमेकं जयावहम् ॥
सर्ववंध्यात्वदोषघ्नं गर्भरक्षैककारणम् ॥ १८३ ॥
पठ्यते प्रत्यहं यत्र स्तोत्रं गणपतेरिदम् ॥
देशे तत्र न दुर्भिक्षमीतयो दुरितानि च ॥१८४॥
न तद्गृहं जहाति श्रीर्यत्रायं पठ्यते स्तवः ॥
क्षयकुष्ठप्रमेहार्शोभगंदरविषूचिकाः ॥ १८५ ॥

चतुर्विधासुरनरतिर्यक्स्थावरवश्यभेदात् नरवश्यविशेषमाह—राज्ञ इति ॥ १७७—१७९ ॥ दग्धस्य रोगाग्निप्लुष्टस्य बीजस्य रेतसः प्ररोहणं प्रजोत्पादनसामर्थ्यप्रदम् ॥ १८०—१८१ ॥ षट्कर्माणि—मोहनमाकर्षणं स्तंभनं विद्वेषणमुच्चाटनं मारणं चेति भेदात्। शांतिवश्ययोस्तंत्रेषु षट्कर्ममध्ये परिगणनेऽपि प्रकृते तयोः पार्थक्येन निर्देशान्मोहनाकर्षणे मेलिते। परकृत्या शत्रुभिः स्वमारणोद्देशेन निर्मिता राक्षसी ॥ १८२—१८३॥ शांतिकर्माह—क्षयेत्यादिना ॥ १८४ ॥

गुल्मं प्लीहानमश्मानमतिसारं महोदरम् ॥
कासं श्वासमुदावर्तं शूलशोफादिसंभवम् १८६
शिरोरोगं वमिं हिक्कां गंडमालामरोचकम् ॥
वातपित्तकफद्वंद्वत्रिदोषजनितज्वरम् ॥ १८७ ॥

आगंतुं विषमं शीतमुष्णं चैकाहिकादिकम् ॥
इत्याद्युक्तमनुक्तं वा रोगं दोषादिसंभवम् १८८
सर्वं प्रशमयत्याशु स्तोत्रस्यास्य सकृज्जपः ॥
सकृत्पाठेन संसिद्धः स्त्रीशूद्रपतितैरपि ॥१८९॥
सहस्रनाममंत्रोऽयं जपितव्यः शुभाप्तये ॥

अश्मानं अश्मरीरोगम् । अश्लीलमिति पाठे विशेषणं ॥१८५॥ द्वंद्वाः वातादिषु युग्मानि त्रीणि ॥ १८६ ॥ अनुक्तं वातव्याधिव्रणादिदोषादीत्यादिना दुष्कर्मग्रहणं ॥ १८७ – १८९ ॥

महागणपतेः स्तोत्रं सकामः प्रजपन्निदम् १९०
इच्छितान्सकलान् भोगानुपभुज्येह पार्थिवान् ॥
मनोरथफलैर्दिव्यैर्व्योमयानैर्मनोरमैः ॥ १९१ ॥
चंद्रेंद्रभास्करोपेंद्रब्रह्मशर्वादिसद्मसु ॥
कामरूपः कामगतिः कामतो विचरन्निह १९२
भुक्त्वा यथेप्सितान् भोगानभीष्टान् सह बंधुभिः॥
गणेशानुचरो भूत्वा महागणपतेः प्रियः १९३
नंदीश्वरादिसानंदीनंदितः सकलैर्गणैः ॥
शिवाभ्यां कृपया पुत्रनिर्विशेषं च लालितः १९४

शिवभक्तः पूर्णकामो गणेश्वरवरात्पुनः ॥
जातिस्मरो धर्मपरः सार्वभौमोऽभिजायते १९५

द्वितीयमाह सार्धैः पंचभिर्महागणपतेरित्यादिभिः व्योमयानैः विमानैः ॥ १९० ॥ नंदीश्वरादिसानंदी नंदिकेश्वरादिसमाना नंदशाली, शिवाभ्यां गौरीहराभ्यां पुत्रनिर्विशेषं पुत्रतुल्यं यथा तथा ॥ १९१–१९३ ॥ शिवभक्तः ईश्वरभक्तः जीवः शिवश्चेति चिद्विभागांतर्गतोऽत्र शिवो विवक्षितः, न तु कैलासवासित्वादिगुणविशेषविशिष्टो गाणपत इति यावत्; जातिस्मरः पूर्वजन्मस्मरणवान् ॥ १९४–१९५ ॥

निष्कामस्तु जपन्नित्यं भक्त्या विघ्नेशतत्परः ॥
योगसिद्धिं परां प्राप्य ज्ञानवैराग्यसंस्थितः १९६
निरंतरोदितानंदे परमानंदसंविदि ॥
विश्वोत्तीर्णे परे पारे पुनरावृत्तिवर्जिते ॥१९७॥
लीनो वैनायके धाम्नि रमते नित्यनिर्वृतः ॥
यो नामभिर्हुनेदेतैरर्चयेत्पूजयेन्नरः ॥ १९८ ॥
राजानो वश्यतां यान्ति रिपवो यान्ति दासताम् ॥
मंत्राः सिद्ध्यंति सर्वेऽपि सुलभास्तस्य सिद्धयः १९९
मूलमंत्रादपि स्तोत्रमिदं प्रियतरं मम ॥
नभस्ये मासि शुक्लायां चतुर्थ्यां मम जन्मनि २००

तृतीयमाह साधद्वयेन निष्काम इत्यादिना ॥ १९६ ॥ लीनः जीवोपाधिलयात्। हुनेत् जुहुयात्, आर्षं रूपं ॥१९७–१९८ ॥ मूलमंत्रादष्टाविंशत्यक्षरमहागणपतिमंत्रात्, नभस्ये भाद्रपदे ॥ १९९ – २०० ॥

दूर्वाभिर्नामभिः पूजां तर्पणं विधिवच्चरेत् ॥
अष्टद्रव्यैर्विशेषेण जुहुयाद्भक्तिसंयुतः ॥२०१॥
तस्येप्सितानि सर्वाणि सिद्ध्यंत्यत्र न संशयः ॥
इदं प्रजप्तं पठितं पाठितं श्रावितं श्रुतं ॥२०२॥
व्याकृतं चर्चितं ध्यातं विमृष्टमभिनंदितम् ॥
इहामुत्र च सर्वेषां विश्वैश्वर्यप्रदायकम् ॥२०३॥
स्वच्छंदचारिणाप्येष येनायं धार्यते स्तवः ॥
स रक्ष्यते शिवोद्भूतैर्गणैरध्युष्टकोटिभिः ॥२०४॥
पुस्तके लिखितं यत्र गृहे स्तोत्रं प्रपूजयेत् ॥
तत्र सर्वोत्तमा लक्ष्मीः सन्निधत्ते निरंतरम् २०५
दानैरशेषैरखिलैर्व्रतैश्च तीर्थैरशेषैरखिलैर्मखैश्च ॥
न तत्फलं विंदति यद्गणेशसहस्रनाम्नां स्मरणेन सद्यः ॥ २०६ ॥ एतन्नाम्नां सहस्रं पठति दिनमणौ प्रत्यहं प्रोज्जिहाने सायं मध्यंदिने वा त्रिषवणमथवा संततं वा जनो यः ॥ स स्यादै-

श्वर्यधुर्यः प्रभवति च सतां कीर्तिमुच्चैस्तनोति
प्रत्यूहं हन्ति विश्वं वशयति सुचिरं वर्धते
पुत्रपौत्रैः ॥ २०७ ॥

नामभिः पूजायां चतुर्थीनमोन्तैः, तर्पणे द्वितीया, तर्पयाम्यंतैः होमे चतुर्थीस्वाहांतैरित्यर्थः ॥ २०१ ॥ प्रजप्तं उपांशूच्चरितं पठितं उच्चैर्व्यक्तमुच्चरितम् ॥ २०२ ॥ व्याकृतं व्याख्यातं; चर्चितं ऊहापोहविषयीकृतं, ध्यातं मनसा विचारितं, विमृष्टं शोधितं, लेखकदोषनिरासेनेति यावत्; अभिनंदितमनुमतम् ॥ २०३ ॥ शिवोद्भूतैः शिवेन शिवया च जनितैः अध्युष्टकोटिभिः प्रत्येकं सार्धकोटित्रयसंख्याकैः ॥२०४–२०५॥ प्रोज्जिहाने उदयमाने 'ओहाङ् गतौ' इत्यस्य रूपम्, त्रिषवणं त्रिसंध्यं संततं वेति प्रयासाधिक्यात्फलाधिक्यं न्यायसिद्धं प्रभवति, देशप्रभुत्वं च लभते, प्रत्यूहं विघ्नम् ॥ २०६–२०७ ॥

अकिंचनोऽपि मत्प्राप्तिचिंतको नियताशनः ॥
जपेत्तु चतुरो मासान् गणेशार्चनतत्परः २०८
दरिद्रतां समुन्मूल्य सप्तजन्मानुगामपि ॥
लभते महतीं लक्ष्मीमित्याज्ञा पारमेश्वरी २०९
आयुष्यं वीतरोगं कुलमतिविमलं संपदश्चार्तदानाः कीर्तिर्नित्यावदाता भणितिरभिनवा

कांतिरव्याधिभव्या ॥ पुत्राः संतः कलत्रं गुण-
वदभिमतं यद्यदेतच्च सत्यं नित्यं यः स्तोत्रमेत-
त्पठति गणपतेस्तस्य हस्ते समस्तम् ॥ २१० ॥

अकिंचनो दरिद्रः, सप्तजन्मानुगां भाविसप्तजन्मपर्यंतमनुवर्तिष्यमाणामपि ॥ २०८ ॥ आयुष्यादीनां नवानां तदुत्तराणि नवपदानि विशेषणानि, आर्तेभ्यो दानं यासां ता आर्तदानाः, नित्यावदाता चिरस्थायित्वे सति शुद्धा अभिनवाः परैरकल्पिता अभिमतं मनसा चिंतितं यद्यत्तदेतत्सर्वं सत्यं, सत्यसंकल्पतेति यावत् ॥ २०९ – २१० ॥

गणेशस्यैकविंशतिनामपाठः

गणंजयो गणपतिर्हेरंबो धरणीधरः ॥
महागणपतिर्लक्षप्रदः क्षिप्रप्रसादनः ॥ २११ ॥
अमोघसिद्धिरमितो मंत्रश्चिंतामणिर्निधिः ॥
सुमंगलो बीजमाशापूरको वरदः शिवः २१२

अथ सहस्रनामपठनासमर्थस्यैकविंशतिनामपाठं प्रतिनिधित्वेन विदधाति – गणंजय इत्यादिना ॥ एतेष्वष्टादशनामानि पूर्वं व्याख्यातान्येव; तत्र गणपतिरिति गणेश्वरगणाधिपादिनाम समानार्थकं, अमित इत्यत्रामृत इति वा पाठः, उभयथापि व्याख्यातमेव ॥ २११ ॥ सुमंगलसुमंगल इति नाम्ना सुमंगलनामचरितार्थम्, वरप्रद इत्यनेन वरदनाम-

चिंतामणिः शिवो बीजमिति नामत्रयं त्विहापूर्वं तत्र क्षेत्र-विशेषाधिष्ठातृगणपतेश्चिंतामणिरिति संज्ञा चिंतितार्थप्रदत्वात्स्वर्गस्थचिंतामणिवत् तद्दैवत्यमंत्रविशेषस्याप्येषा संज्ञा तद्रूपत्वाद्देवोऽपि चिंतामणिः । शिवपस्य तु वश कांतौ शिवः स्मृत्या इति जगदुत्पादनेच्छाशक्तिमत्त्वादयो बहवोऽर्थाः शिवाष्टोत्तरशतनामसु प्रथमनामव्याख्याने शिवा स्वाधीन-वल्लभेति ललितासहस्रनामव्याख्यानेऽतिविस्तरेणास्माभिर्वर्णिताः । बीजं सर्वजगत्कारणं ॥ २१२ ॥

काश्यपो नंदनो वाचासिद्धो ढुंढिविनायकः ॥
मोदकैरेभिरत्रैकविंशत्या नामभिः पुमान् २१३
यः स्तौति मद्गतमना मदाराधनतत्परः ॥
स्तुतो नाम्नां सहस्रेण तेनाहं नात्र संशयः २१४

नमो नमः सुरवरपूजिताङ्घ्रये
नमो नमो निरुपममंगलात्मने ॥
नमो नमो विपुलपदैकसिद्धये
नमो नमः करिकलभाननाय ते ॥ २१५ ॥

इति श्रीगणेशोपपुराणे उपासनाखंडे महागणपतिप्रोक्तं
सहस्रनामस्तोत्रं नाम षट्चत्वारिंशोऽध्यायः ॥

इति गणेशसहस्रनाम संपूर्णम् ।



काश्यपः कश्यपपुत्रः, शिवाद्या गणाः। इयं च कथा गणेशपुराणे उत्तरखंडे प्रसिद्धा, धरणीधर आशापूरक इत्यादिनाममूलभूताः कथा अपि तत्रैवानुसंधेयाः; विस्तरभयान्नेह प्रदर्श्यन्ते ॥ २१४–२१५ ॥ ग्रन्थान्ते मङ्गलमाचरति–नमो नम इति। विपुलपदं परंधाम तस्य मुख्या सिद्धिर्यस्मात्सः, स्पष्टमन्यदिति सर्वं शिवम् ॥

भाष्यकृत्प्रशस्तिः

गभीरबुधयज्वनस्तनुभुवोऽधिवाराणसि-
त्रिलोचनपदानुगः कृतमखोऽग्निचिद्भास्करः ॥
महागणपतेर्महान्त्यपि सहस्रनामानित-
दयाजनितया धिया सुजनतुष्टये व्याकरोत् ॥ १ ॥

संप्रदायजुषामेष खद्योतो लोकबान्धवः ॥
ग्रंथविस्तरलुब्धानां खद्योतो ज्योतिरिंगणः ॥ २ ॥

श्लोकाः षट् ६ प्रथमे त्रयस्तु ३ चरमे नाम्नां शतां तेषु तु श्वास ७४ श्चित्त ६६ वणि ५४ क्सुता ६७ गति ६३ गुणा ५३ धर्मः ५९ सखे २७ त्यष्टसु ॥ स्तोता ६६ धीद ८९ इति द्वयोः समुदिता पादाधिका षट्शती पादोना द्विशती परापि १७५ तदयं ग्रंथोऽष्टशत्यात्मकः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणभारत्युपनामकगंभीररायदीक्षितसूरिसूनुभास्कररायदीक्षिताग्निचिता रचितो गणपतिसहस्रनामार्थप्रकाशकः खद्योतः संपूर्णः ॥

श्रीगणेशार्पणमस्तु ॥ श्रीरस्तु ॥

संपूर्णोऽयं ग्रन्थः।

***